अथ स राजा सर्वदेवताराधनपरः परं धिषणोपपन्नोऽपि दिव्यानन्दजननेषु कविगुणेषु प्रीतिमानभूत् । अविबुधोऽपि क(या?था)मृतरसं कलावृतमेषावण (?)।[1]

एकदैनं सभागतमभिनवो गन्धर्वस्तुम्बुरुरिव जम्भशत्रुमित्युपावीणयत् —

दनुजपतिहृदयभूधरविभेदविज्ञातशक्तिनखकुलिशम् ।
जगदुदयहेतु विष्णोरवतु वपुर्नारसिंहं वः ॥

स इमामार्यामाकर्ण्य गुणकुतूहली तमप्राक्षीत् — 'भद्र! कस्यैतान्यक्षराणि विकटबद्धान्योजस्वीनि च लक्ष्यन्ते, कस्य चेयं वर्णरचना माधुर्यवती प्रसन्ना चेन्दुकरकलिकेव श्रवणानन्दमुत्पादयति' इति ।

स तु सम्प्रणिपत्य व्यज्ञापयत् — देव! परमनुगृहीतोऽस्मि, क्षणमवधानदानादनुगृहीततमः क्रियतामयं जनः । "अस्ति दिशि पश्चिमोत्तरस्यामार्यदेशशिखामणिरानन्दपुरं नाम ब्राह्मणानां महानावासः । ततो हि निःसृता सरस्वतीव ब्रह्मलोकादगस्त्यमूर्त्तिरिव पीतोद्गीर्णगम्भीरशब्दसमुद्रा दक्षिणां दिशमनुगृह्णन्ती सकलांकितवसिद्धान्तप्रपञ्चमूलेन मूलदेवेन सख्युरचलस्य कृते निवेशितमचलपुरं नाम गवप्रोदकपुष्पवासितकलमकाननायासिकभूमौ (?) नगरमपरमिव धरणिगोचरममरलोकम्, आस्पदं पुण्यकर्मणामलघु त्रिविक्तमन्त्रविस्तारसम्भृतधृतिरधिवसति कुशिकवंशवर्धनी सर्वातिथिरप्रतिग्रहीत्री महत्युदाररूपा ब्रह्मराशिर्ब्रह्मसन्ततिः ।

तत्रोदपादि भगवतो विधिवदाहृतसर्वसप्ततन्तुरूपिणो नारायणस्वामिनो नाभिपद्म इव ब्रह्मैकधाम दामोदरस्वामिनामा तेजो(यमः? मयः) कुमारः । स यौवनारम्भ एवातिसुभगाकृतिरकृतकवाक्यदर्शितपुण्यसद्भावया सर्वाङ्गमनो-

1. A reads मेणापन्न. page 6.

हरया सर्वकलाविदग्धया सर्वभाषाप्रवीणया प्रमाणयुक्तया ललितपदविन्यासया चतुरहृद्यालङ्कारया विशुद्धजातिवृत्तया सरस्वत्या स्वयंवर (ए ! इव) कन्यकया स्वयमुपेत्य सस्नेहमस्वज्यत । को हि नाम भगवतीं भवितव्यतामतिक्रम्य यथा-समीहितेन साधयति पथा, यतः कौशिककुमारो महाशैवं महाप्रभावं गवां प्रभव प्रदीप्तभासं भारविं रविमिवेन्दुरनुरूप्यदर्श[1] इव पुण्यकर्मणि विष्णुवर्धनाख्ये राजसूनौ प्रणयमन्वबध्नात् ।

एकदा च मृगयां गच्छतामुना नीतस्तन्निर्बन्धादस्वकुलसमुचितमहुतशेषं मांसमा ....[2] नयैव लज्जया पित्रोरन्तिकमनु(प)सृत्य तीर्थयात्राप्रसङ्गेन दिगन्तराण्यभ्रमत् । भ्रमणशीलकीर्तेर्गाङ्गेयकुलध्वजस्य दुर्विनीत इति वि[परीतनाम्नः]....[3]गुणनिधिरमृतधाम्न इव कुमुदाकरो गोचरमगमत् । अमुना च साधुलङ्घनमूलमात्रमात्मनिवेदनादिसौजन्यं दर्शयता वशीकृत[स्तदभ्याशे वसति । आर्येयमियं च व]....[4](त)स्य द्विजकुमारस्य मतिविलसितम् । विदितं नाम तस्य सदसद्विद्यमानकं भुवनेषु । वयसा चासौ विंशतिवर्षदेशीयः" [इति क्षितितलनिहितमौलिः प्रणम्याचार]....[5]भृति भूपतिर्जातकौतूहलो हलधर इव सरस्वतीतीर्थानि सम्भावयन् अनेकश्रीमुखपरम्परानुकृष्टमेनमात्मसादकरोत् । [माहात्म्याद[6]तिशयदर्शिताराधितपुरु]....[7]चतुराननस्यादिकवेर्द्विजोत्तमस्य प्राकृतानां च वस्तुभेदानां तत्पूर्वं[8] प्रकटयितुस्तस्य पुत्रीकरणेन दर्शितातिप्रसादस्तदनुरूपमन-[ल्पपत्रपरि]....[9]प्रादाच्च ब्रह्मदेयपरिमितम् । एकदा च प्राकृतगानानि कानिचित्तेन प्रेषितानि श्रुत्वा परं प्रीतः स्त्रीसहस्रकुलं च काञ्चनाममत्रे[10] सुरभि....[11]

1. Shall we read अनुरुध्य. See Avantisundarī kathāsāra —अनुरुध्या-करोन्मैत्रीं. I. 23.
2. L. about 8 letters.
3. ,, 6 letters.
4. ,, 8 letters.
5. ,, 12 letters.
6. May be read माहात्म्यातिशय,...
7. L. about 10 letters.
8. A reads पूर्वकं. page 7.
9. L. about 10 letters.
10. May be read काञ्चनाभमति.
11. L. about 12 letters.

मापूर्य त्वद्गुणप्रेमप्रस्नुतानां त्वन्मातॄणां स्तन्यमिदम्। अतिबहुत्वादस्मां प्रत्येकं स्तनपानयत्नगौरवं तव स्याद्, अतोऽस्माभिरेकत्रैव संभृतमिति प्रजिघाय। एवंविधाश्च सम्मानभाजः[1] प्रतिमासं प्रतिपक्षं प्रतिदिनमित्यवर्धयत् पृथिवीपतिः।

स च तथानुगृह्यमाणो[2] गन्धमादनप्रभृतिभिश्च[3] वरकृतैः संस्कृतप्राकृतानां च काव्यानां लक्षणैर्दक्षिणापथं सनाथमकरोत्। नृपतिनिर्बन्धपरिणीतश्च ब्रह्ममयान् समग्रवाङ्मयाधारभूताननन्तमूर्तीनचलकुलस्थितिविहितसन्निवेशानम्बुराशिगम्भीरानुज्ज्वलराजहंसोपग्रहप्रकाशतेजसो लोकानिव त्रीन् सिंहविष्णुमनोरथातिलोभनाम्नस्तनूजानजीजनत्। येषां गृहेषु प्राधीतपटुब्रह्मघोषःस्थानव्याख्यायमानसर्वशास्त्रध्वनिः, अङ्गनाजनचरणपद्मजल्पाकनूपुराहूतभवनदीर्घिकाकलहंसकोलाहलः, सकलातिथिसार्थसन्तर्पणकलकलो, गन्धपरिमलभ्रान्तभृङ्गमण्डलीझङ्काराकृतिरभिमतगृहदेवाराधनपरपुरन्ध्रिमण्डलारब्धबहुविधोत्सव-स्वनश्च पल्लवदानशक्तिघोषणापटह इव दिवानिशमिञ्चितपदचतुरसञ्चर[4]त्सरस्वतीभूषणरवमन्थरो दध्वान।

मध्यमस्तु तेषां[5] मनोरथ इव चिरेणोपपन्नः कलिजिगीषोर्धर्मस्य माहात्म्यवतो महितमहाशब्दौघपूरितान् महीभृन्मानितान् मर्यादारक्षणोचितान् महागुणरत्नराशिभाजो महासत्त्वान् महोदधीनिव मध्यमो लोकश्चतुरो दामोदरभवदाससिंहविष्णु(वीर)दत्तनाम्नो ब्रह्माधिष्ठितान् सुतानलभत।

तेषां तु कनीयसो निसर्गशुद्धवृत्तस्य वीरदत्तशर्मणो ब्रह्मर्षेर्वसिष्ठस्येवारुन्धती सतीनाम[प्र]गामिनी[6] गौरी नाम माठरसगोत्रा ब्राह्मणी गृहिणीपदमध्यतिष्ठत्। स तस्यामनेकदुहितृजन्मजातोद्वेगशान्तये तन्तुमेकं

1. May be read सम्माननाः.
2. A reads तथापूज्यमाणगन्ध.
3. ,, प्रभृतिभिः श्रीवर. page 7.
4. Read अञ्चितपद.
5. A reads तेषां मनोरथो मनोरथ. page 7.
6. ,, नाम कामिनी.

दण्डिनाख्यानमविन्दत । पितुरस्य प्रेयसी सपत्नीपुत्र इत्यकृत्वा मत्सरं महानुभावा सप्तमाद्वर्षादारभ्य सरस्वत्येव सुप्रसन्ना दण्डिनमवर्द्धयत् ।

तस्मिंश्चोपनीते पठति तद्गुरुर्गुरुदिदृक्षयेव स्वरगात् । तस्मिंश्चान्तरे परचक्रपीडया पर्याकुलेषु द्रमिळचोळपाण्ड्येषु, परामृष्टासु कुलवधूषु, विरतेष्वग्निहोत्रेषु, विलुप्तेषु धान्यकूटेषु, विद्रुतेषु कुटुम्बिषु, जृम्भितेष्व....[1] भिन्नासु मर्यादासु-छिन्नास्वारामपङ्क्तिषु, भग्नासु सभाप्रपासु,[2] पर्यस्तासु सत्रशालासु, निहतेषु धनिषु, प्रहृतेषु कापथेषु, द्रमिलेष्ववलीढेषु, ....[3]दिव कलौ कारयत्येकराज्यमुपरतप्रनष्टबन्धुवर्गः प्रद्रु(म ! )तप्रायपरिजनः प्रवृत्तवृत्तिक्षयो दुर्भिक्षक्षीणकोशः कौशिकदारको दण्डी...[4]या देशान्तराण्यभ्रमत् । अवसच्च चिरमभिलक्षितेषु गुरुकुलेषु, अलभत चानवद्यां विद्याम् । गरीयसीषु च ब्रह्मक्षत्रसंसत्स्विवतरदु....[5]स्रातमाव....[6]कस्य कल्पवृक्षक्रियाविस्मापितदुर्जयस्य मान्धातृनाम्नः स्थपतेः प्रशस्तवास्तु, शास्त्रार्थसारसामस्त्यसंहारोन्मीलितप्रयोगतन्त्र....[7]विस्तारकुशलः[8] षण्णवतिप्रासादविधिविशारदो यानासनशयनादिनानाविकल्पनापटुः स्थितचरधारद्वीप[9]ज्वरव्यामिश्रसंज्ञानां षड्विधानां यन्त्रा[णाम]...[10][तीयप्रयोक्ता षट्त्रिंशदाचार्य]गुणैरलङ्कृतो ललिताळयनामा समस्तसूत्रगृही वर्द्धकी[11] तक्षकपक्षप्रती[क्ष्यं ? क्ष्यः]क्षत्रियैश्च संस्कृतः स्थपतिरभ्येत्य विरचिताञ्जलिरार्द्रदृष्टिर्निर्दिष्टायां भूमावुपाविशत् ।

1. L. about 6 letters.
2. A reads सभादिप्रपासु. page 7.
3. L. about 10 letters.
4. „ 18 „
5. „ 16 „
6. „ 4 „
7. L. about 18 letters.
8. A reads विस्तारषण्णवति. page 7.
9. May be read धारा...
10. L. about 4 letters.
11. Read प्रही.

दृष्टेऽपि तस्मिन् विस्मयस्पृशो जनस्य, 'अयं किल यन्त्रपुरुषैर्द्वारयुद्धमहीन-मादर्शितवान्, अनेन किल अलीकजलधरधाराजलजालदन्तुरमन्तरिक्षं कृतम्, एष किल यन्त्रमयमिन्द्रजालिकं कृतवान्, एष किल संख्येष्वसंख्यानां युगपदेव भिनत्ति शत्रुहस्तिनां मस्तकस्थलानि मुसलमात्राभिरिषुभिः, अमुना किल द्रमिडभाषया शूद्रकरचितमुपनिब[न्ध ? द्धम्], अस्य किल पित्रा यवनानप्यति-शयानेन क्षुधितोऽयमिति यन्त्रेणाभिधापितम्, अयं ततोऽप्यधिकः किल' इत्येवमासन् विकसितकुतूहलाः प्रलापाः ।

प्रशान्ते च कलकले सकले स दण्डिनमवादीत्—“अस्ति किञ्चिद् विज्ञाप्य(म् । अ)वसिता एव सर्वे नित्यप्रमादशैथिल्याभ्यां शिल्पातिशयाः । यतोऽस्य त्वेवं प्रयोगलेशोऽपि विस्मयाय लोकस्य । युष्मादृशां तु ब्रह्मेन्द्रपराशर-प्रभृतिप्रणीतशास्त्रहृदयवेदिनां कियदिवैतस्मिन् नैपुणमपि । तदनुग्रहार्थमेव केवलम् अनुमहामल्लपुरम् उरुतरङ्गहस्तसंवाह्यमानपादपङ्कजस्योर्मिमालिनो भगवतो भुजगवरशयनमनुगृह्णतः शैलस्य शार्ङ्गधन्वनः केनापि कारणेन मणिबन्ध एव भग्नो दक्षिणः करः । स तु मया प्रतिघटितः । किमसावतिमहद्भिः पूर्वाचार्यैस्तस्या दिव्याकृतेर्घटिताया अनुरूपं घटते न वेति द्रष्टुमर्हथ । न हि वः शक्यमस्मादृशामसाधारणेनाभ्यर्थितमकृत्वा स्थातुम्”[1] इति ।

अथ सन्निधावेवोपविष्टाऽधिष्ठानमिव सर्वसद्गुणानां, सर्वस्वदानदीक्षयाप्य-सन्तु(ष्टा ? ष्ट)त्यागशक्तिः स नित्यकलासमागमसभागृहं, सर्व(न्रा ? ना)गरिकानु-करणीयलीलासौष्ठवः सर्ववीराग्रेसरो वीरवतामपरनामा रणमल्लसेनापतिकुमारः[2] सहपांसुक्रीडासम्भृतस्नेहराशिरब्रवीत्—“आर्य, सम्भाव्य एवास्य शिल्पिवरस्य प्रणयः । बह्वाश्चर्याणि गिरिसमुद्रकाननानि । मित्रं च तवैष विश्वब्रह्मराशेः कल्पसूत्रटीकाकारस्य सकलविद्यानदीपूरवारिधेस्त्रिंशत्क्रतुविभूतिभावितत्रयस्त्रिंशस्य

1. A reads नीत्या, page 8. 2. Should we read रणमल्लः सेना....

शापानुग्रहसमर्थस्य ब्रह्मर्षेर्भवरातनाम्नः पुत्रः, तत्पुत्राणां तत्समानमेधादिसर्व-
सम्पदां द्वितीयस्त्रय्यामङ्गेष्वे[तिह्यकलासु] कवितायां चाद्वितीयः सुहृन्मतनिर्विकार-
दत्तहृदयो गुरुपरिचर्यापरः परममाहेश्वरो लब्धवर्णकर्णधारः कर्णमपि नापरा....[1]
कस्त्यागशक्त्यातिक्रान्तो मन्त्रार्थतत्त्वव्याख्यानचतुरश्चतुर्वेदवित् सर्वजनमातृभूत-
करुणावृत्तिर्मातृदत्तः तदा चैषा....[2][करस्वामिनो देहभज (?)सहजकीर्तिराम्नाय-
निधिर . . . . भूमिदेवनिवहचूडामणिर्देवशर्मा त्वद्दर्शनाय केरलेभ्यः काः
. . . . तदेषामपि सङ्कल्पानुकूलोऽयमारम्भो निर्विचारम . . . . . परेद्युः
सह मित्रजनैः श्रीजयन्तनारायणभजनानन्दप्रभृतिभिः सह . . . . . .
लीनक्ष्माभृत्पक्षच्छेदाक्षमसहस्राक्षदे . . . . . वैरिणममरगणमसुरसैन्यसङ्घो
. . . . . मदनेकपपोतकाकुलितवनं वनषण्डमिवोद् . . . . . श्चर्योद्भव-
कूटसाक्षिणमिव कालकूटादेरिण . . . . . नभसो भासुरभुजङ्गराजस्फुट-
फणारत्नचक्रवालकरालितं . . . .] सरिदङ्गनाभिसरणप्रकाशसौभाग्यराशि-
मम्बुराशिम्, आशीविषभोगभीषणैश्च रावणभुजदण्डैरिव राजताचलं कैलास-
मुल्लासिभिरुदन्वदूर्मिभिः स्पृश्यमानमूलं राजमन्दिरमुदीक्षमाणः, तरलतरङ्गभङ्गभग्न-
गर्भशुक्तिगर्भोन्मुक्तमुक्ताफलदलशबलवालुकेन शीतलगन्धोद्गन्धिमालिनापि मुकुल-
बकुलचक्रप्रवरलाञ्छितेन, प्रचुरचूतपरिमलेन स्फीतसुरभिचम्पकाशोकवृक्षोत्पल-
पुन्नागतिलकसालसिन्दुवारवारितामोदेन क्रमुकनालिकेरमालिना जलधिवेलापथेन
किञ्चिदन्तरमतिक्रम्य व्याकोशकुवलयदामश्यामलाभिर्लक्ष्मीकटाक्षमालाभिरिव
लवणसागरतरङ्गराजिभिर्लङ्घ्यमानशरीरं दूरोत्थितफणासहस्रस्फुरितताम्रदृष्टि-
मालेन[3] पुनरपि मधुकैटभदानवाभिपतनशङ्कानिरूप्यमादिशेव[4] शेषेणोह्यमानं
योगनिद्रामन्थरमुकुलितेक्षणप्रभावप्रवाहेण नाभिरन्ध्रमुक्तेनाश्चर्यसहस्रपत्रेणानु-
गृह्यमाणकमलासनं भगवन्तमुत्फुल्लेन चक्षुषैक्षत ।

1. L. about two letters.
2. Space for about ten lines is left blank in the manuscript.
3. May be read जालेन.
4. Read आदिशतेव.

स्वं च हस्तयुगलमयत्नेनैव कु(ड्)मलितमथापतिं(?) गुरुभक्तिभारनम्रमूर्धा निर्धौतात्मक(र्व ? ल्म)ष इव तदङ्गस्पर्शपावनैः पारावारशीकरसलिलबिन्दुभिरवहितेन चक्षुषान्ततस्तदर्चाशरीरमभिनिरूप्य क्वचिदप्यनधिगतघटनाप्रस्थानभेदस्तमेव स्थपतिमालोक्य 'अपचयितस्य पुस्तकर्मणः काष्ठयम्, अत्र तु कस्त्वया प्रतिसंहितःकर' इत्यभाषत ।

स तु विनीतश्रमः शिल्पिवर्यः कृतार्थोऽहमेतावतेति रचिताञ्जलिरनंसीत् ।

अस्मिन्नेव चान्तरे झटितिकारिभिरदभ्रसंभ्रमभ्रमितपक्षपालिभिर्वेलोद्यानभ्रमरमण्डलैर्युगपदेव प्रत्युद्गतो, भगवन्नाभितामरसवासोद्भवभ्रान्तिहेतुरपरपारिजातोद्भेदसन्देहदायी,[1] योगनिद्राचिरनिरुद्धरत्युत्सवोत्कण्ठमानलक्ष्मीनिःश्वासप्रसरसौरभ्यसंशयावहः शतमखपरिभुज्यमानदिग्वधूपरिमलायमानः प्रत्यङ्मुखो घ्राणलेपी कोऽपि दिव्यः सौरभातिशयोऽभ्यागमत् । किमिदमिति प्रबलविस्मयप्रहितदृष्टयः सर्व एव ते किमप्युल्लसत्प्रवालवल्लरीवलयपाटलमिवोन्मिषदुरगफणारत्नलावण्यलेप[2] .... दौर्वपावकज्वालोपरक्तमिवोत्पतत्सपक्षपर्वतशिखराभ्रलक्ष्यकल्पवृक्षस्तबकताम्रमिव[3] च सन्ध्यायमानं समुद्रोद्देशमद्राक्षुः । क्षणादिव....[च[4] पश्यतां तेषां] लोलकल्लोलमालोल्लासितोपस्तं[5] स्यन्दनचक्राधिकप्रमाणमुत्केसरपङ्क्ति किञ्चित् पङ्केरुहं तदासीत् । आसीच्च पुनरच्युतचरणारविन्दस्पर्श....[र ? न्त्रेणैव[6] दिव्यस्रगनुलेपनाभरणः] कृपाणधारामरीचिमञ्जरीभासुरैकबाहुरितरकरकलितरत्नोच्चित्रचर्ममण्डलः प्रतिघ्नन्निव स्वतेजसार्कभासं कोऽपि विद्या...[स च भगवन्तं[7]

1· A reads कान्ति, page 7·
2. L· about 6 letters.
3· .A reads दौर्मिपावक· page 9·
4· L. about 4 letters·
5· A reads लोक· page 9.
6· L. about 4 letters.
7· ,, 8 letters·

प्रदक्षिणीकृत्य हेतिगर्भमञ्जलिमुपा]रचयत् । उत्पतनरंहःप्रेङ्खोलितप्रालम्बहार-[1]जालचलबालाकमालाबहलखड्गप्रभाम्बुवाहवाही सहसैव दिवस....[तैस्तु लोकोऽति-मात्रविस्मयविस्मृता]न्तरात्मा निरन्तरोदञ्चदुच्चरो(त ? मा)ञ्चपुञ्जकञ्चुकितश्चिन्ताम् ।

अथ चित्रीयद्धल्लात्कृतचित्तसङ्गतः कथेतिहासरसास्वादरसिकः स्मित-पूर्वाभिभाषी विशे...[2][ल्यवन्ध्यवागलभ्यरन्ध्रस्थूललक्षो]वि(ल ? )क्षणः[3] कलासु, विनीतो विद्यासु, विस्रब्धः सुहृत्सु, विमुखः पापेषु, सुभगः सुकुमार-श्चतुरः संविभागी कृपालुः शीलवानुदारसत्त्वः सत्यरतिश्चोलाभिज[नो विश्वामित्र]गोत्रः कृती रामशर्मा नाम बालमित्रं चित्तानुवर्तनेषु[4] दा(षो ? सो)[5] दुर्नयनिवारणेषु गुरुर्विस्रम्भेषु हृदयमसुभिरपि स्पृहणीयायां प्रियभूमौ किल दण्डिनमवादीत् । ननु गौरीपुत्रस्यापि प्रत्यक्ष एवायम् । अध्यक्षयद्भिरप्यश्रद्धेयो गरीयानद्भुतोदयो यथेदमभ्रेसरःकुसुमितलुज्जिहानेन( ? ) मिहिरमण्डलानुकारिणा रक्तपुण्डरीकेण पुनरमुष्य पुष्करस्य परिणतिः पुष्करेक्षणचरणपद्मसम्पातानन्तरं केयूरिणी किरीटिनी मण्डलिनी मण्डलाग्रणी(चे ? चो)दगान्मरुत्वत्पथम् । अद्यत्वेवं पुनरीदृशानामसुलभदर्शनत्वादलघुविस्मयप्रसरभारपीडितं नो हृदय-मलमसि खल्वनुमानगत्या विदूरमुन्नेतुम् । अत इह कथमवकल्पयत्यत्रभवतो मतिरिति ।

स तं प्रत्यवोचत् — सखे ! न(तु ? नु) सर्वेषामेव नः समानं दर्शनम् । इयदिह शक्यमुन्नीयावगन्तुम् —'एष कोऽपि नभश्चरेश्वरः कस्यापि रोषणस्य महर्षेः पुष्पसम्बन्धापराधापकारितादनुव्याहारादम्बुरुहत्वमवाप्याम्बराद्म्भसां निधौ पतितः

1. L. about 4 letters.
2. ,, 2 letters.
3. May we read विचक्षणः.
4. A reads चित्तावर्जनेषु. page 9.
5. ,, दाने. ,,

स्रोतोभिर्वा स्थलादुपहृतः कालकल्पमनल्पं वारिधेः क्षारवारिणि परिभ्रम्यस्यापि[1] हि मेऽस्मिन् विस्मयवस्तुनि जिज्ञासया समाक्रान्तमेव हृदयम् । तदेहि गच्छाम इति सह सहायैः काञ्चीमेव न्यवर्त्तत ।

तदाश्चर्यश्रवणरागावर्जितमनोभिस्तु मातृदत्तरामशर्मप्रभृतिभिः प्रियसखैर्मुहुर्मुहुः प्रेर्यमाणो गणरात्रकृतात्मशोभनो[2] द्वादश्यामश्रान्तभक्तियोगः कल्पोक्तेन विधिना विधाय विष्णुपूजां दर्भशयनमध्यशेत । तथा शयानं चाशरीरा सरस्वती स्वप्ने एनमन्वग्रहीत् । "वत्स ! समृद्धं ते समीहितम्, सुप्रसन्नस्ते सुरासुरगुरुस्त्रयीशरीरस्त्रिभुवनपतिस्त्रिधामा । प्रतिभातु तवैतदाश्चर्यभूतं सर्वपुरुषार्थोपदेशगुरु सर्वद्वीपवृत्तान्तबहुरसं सर्वकलाकलापगर्भगम्भीरं सर्वसमयरससम्भेदसम्मतं सर्वादिराजवंशवर्णनमनोहरकथं सर्वदेवासुरवृत्तकीर्त्तनाद्भुतं सर्वमनुजगन्धर्वसिद्धविद्याधरेश्वरस्य राजवाहननाम्नो[3] [. . . पारमत् । उपारमत यामिनी । विस्मयप्रतिबुद्धस्य चास्य लोत् . . .] देवजलाप्लुतः सुचिरोपस्थितपूर्वसन्ध्यः स्वनुष्ठितभगवदाराधनः स्वादुचतुःसमान(?)सन्तर्पितद्विज(प ? व)रः स्वयं च प्राशितहविष्याशनः प्रशस्तमङ्गल्यवेषः शुश्रूषवे सुहृद्गणाय कथामवन्तिसुन्दरीमाचिरव्यासुरित्यभाषत । युष्मत्प्रार्थितानुष्ठितप्रयत्नेन मया मधुनरकारिष्टकेशिकंसध्वंसनस्य त्रिभुवनैकमङ्गलस्य भगवतो भक्तभयहरणविधिविचक्षणस्या-[म्बुजेक्षण]स्य प्रसादादम्बुनिधावम्बुजस्याम्बरेचरत्वमाप्त्यवसानमद्भुतमतिमहत् कथाशरीरं दृष्टम् । अस्ति चेत् कुतूहलमयमहं कथयामि । श्रूयताम् :—

[आसन्नसङ्कीर्णविविक्तवर्णाश्रमा . . . . . र्यपश्या असूर्यपश्याः सुन्दरपुरन्ध्रयो निरवगहत्रि]स्वारम्भगुरुकुटुम्बिवर्गा (?) रङ्गोद्गङ्गसङ्ग-

1. The text is defective. We may read परिभ्रम्यति । अस्यापि.
2. शोभनः is more probable.
3. There is no lacuna in our Ms. But obviously some portion is missing.

ताद्यन्नतुङ्गागारशीफराः सरलकाकुसैरिकजनाः सर्वजनीनसर्वजनास्त्वार्ये....[1] वग्रहं निर्भयाः निरातिव्याधिसम्भवाः स्तम्बकरिहरितसरिभतः(?) तामरसविसरसुरभयो नाव्यनदीप्रवाहा यव्ययवकयषष्टिक्योद्देशपेशलाः शा....[2] केदारभागा गोधूमीनक्षेत्रकाण्डाः पृथुलतिश्यस्थल्याभोगाः प्रशस्तकौलस्थ(ली ? की)नस्थला महितमाष्यभक्तय उद्गमौ(गी ? द्वी)नोर्वरा मासुरीण[ वरभुवः प्रचुरमञ्जीरकपरिय ? ]....[3] तराजमाषाः निष्पावनिकरकर्बुरा गौरसर्षपतधीपरिकरा( ? )जरठकुसुम्भकुड्मलविजृम्भणारुणप्रदेशाः प्रसुपानप्रसुरकरप्रेटक(?)[4]प्रकटयो[निपोषा गो]जाविमहिषपोषिणो बाष्पच्छेद्यशष्पकबचितविविधवीथयः प्रासादादीयदाकु( ? )वर्धनद्रव्यवनराजयो बहुफलेभ्रहिद्रुमसमप्रोदग्रग्रामसीमानः सारसकलहंसावतंससरसविकटतटाकमण्डलाः प्रच्छायसुखप्रपापङ्क्तयः प्रस्निग्धतलसुभगसद्भावकाः प्रत्युदपानप्रक्लप्ताटहारिणः(?)[5] पुण्यारामशालिनो[6] मगधा नाम जनपदाः ।

तस्मिन्नामापि नागृह्यत राजद्रोहस्य । वार्त्तापि नावर्त्ततोपद्रवाणाम् । कथापि नाक्रियत कलेः । स्मृतिरपि नाजायत जन्यस्य । चिन्तापि नासीत् त्रासकर्यस्य । प्रसङ्गोऽपि नाभवदभिषङ्गाणाम् । तस्मिंश्च पङ्कः पङ्कस्योप-[7]कारमात्रको, न हि न ह्यधिकोऽप्यस्ति वधूनां कुचतटेषु कुङ्कुमपङ्कः । केवलमाक्रीडाचलतलेषूपलाः । कण्टकः कमलनालेष्वेव दृष्टः, आतिष्ठतुपुनरपि दृष्टः प्रियतमानामालिङ्गनेषु । श्रेणिः प्रासादशिखरारोहणेष्वेवासीत् । दुरवधूत-[8]मिदमासन्नं च विहरत्सु जलविहङ्गमेषु तेन(?) चान्योन्यसन्निकृष्टधनधान्यशैलकूटसहस्रलङ्घनायासमयादिवाप्रवेशक्षमो दुर्भिक्षकालकलिकश्च कल्याणोद्यतदुन्दुभि-

1. L. about 16 letters.
2. „ 16 letters.
3. „ 6 letters.
4. A reads खेटक. page 10.
5. A reads प्रक्लप्ताभवद्दारिण. page 10.
6. „ पुष्पा. „
7. Shall we read पङ्कजस्य?
8. Here the text is mutilated.

ध्वनिप्रबन्धविद्रावितः सरभसमहास्यतेव विकस्वरेण कुमुदकोकनदसरस्स-हस्रेण। तस्मिंश्च शङ्के कलशोद्भवपानभयादिवोधस्सु धेनूनां लीनः क्षीरसागरः। हरिकुलिशव्यसनशङ्कयेव तिरस्कृत्यात्मानं सुरभवनीभूतानि भूधरकुलानि। राहुमुखविषनिषेकदूषणभियेव सोमेन सुधारसः पुण्ड्रेक्षुषु क्षिप्तः। प्रबलपवनपर्यासत्रासेनेव चापहाय मरुत्पथमवनिलग्नानि तरुषण्डच्छलेन मेघमण्डलानि।

तस्य चैवंविधस्य मण्डनं मगधविषयस्य, मह्याः स्वर्गविजयसाधनं, अपवर्गसुखतिरस्कारकारणं जीवोज्जीवस्य, जाह्नवीपरिभोगरागरोषितेनोर्मिमालिनेव महता [1]खातवलयेोपरुद्धम् उत्तुङ्गधवलप्राकारमध्यवर्तितया पौरतरुणसुन्दरी-कान्तिभावनाहेतोरिन्दुमण्डलादिवोत्कीर्य क्षिप्तम्, अमलमणिभूमिगर्भसंक्रान्त-प्रतिबिम्बतया विततमणिमयूखजालपक्षैस्तार्क्ष्यैरिव रसातलमुरगोद्धरणहेतो-र्विशद्भिर्दारुसारमयैः महाप्रासादैरुपशोभितम्, उदयसमुद्रगाधदर्शनोत्क्षिप्तपुर-देवताभुजलतानुकारिभिः खातवलयपिनद्धैर्मणितोरणैः [2]समुल्लासितम्, उन्मील-दनेकरत्नरागवलयिभिरतिरभसरतिविहारविच्छिन्नैर्लक्ष्मीमेखलागुणैरिव विपाणिपथै-रुपेतम्, उन्मदहंसमण्डलचलितेन्दी...[3]राजिभिरुन्मिषत्तारकागणकरालितान्धकार-सन्ध्यारागैरम्बरैकदेशैरिव मण्डलीकृतैः मणित(द ! ट)रश्मिजालसन्दिग्धवारिभिः सरोभिरुद्भ्राजमानम्, उपवन..[4]तबहुविधकुसुमधूलिपाटलपटम् उपरिलग्नमुष्णीषमिव सकलनगराधिपत्यचिह्नमुद्वहद्भिः,[5] ब्रह्मणोपरिगमनावलेपवारणायेव प्रकम्पमानो[6]च्छ्रित-प[ताकव्यस्तम् अखिलजम्बूद्वीपलक्ष्मील]तैककुसुमं कुसुमपुरं नाम समग्रस्त्री-पुरुषरत्नसारसंभूतिसागरायमाणं नगरमभवत्।

1. Read खातवलयेनोपरुद्धं.
2. A reads समुद्भासितं, page 10.
3. L. about 4 letters.
4. L. about 4 letters.
5. The clause is incomplete.
6. A reads प्रकम्पमान॰ page 10.

अभ्रंलिहभवनसहस्रोपरुद्धगतिरमर्षज्वलित इवो[त्सर्पदरुणमणिप्रभाप्रवाहोपरक्तवपुर]म्बरमध्यस्थितोऽप्यमुक्तशैशवच्छाय इव यत्र लक्ष्यते भगवान् भानुमाली। यस्य च सारगौरवादिव सप्तसागरतरङ्गसङ्घातघोराभिघातायासिता[पि न कदाचन चलति भूतधात्री। (यं च? यत्र)] निवसता धनपतिसहस्रेणाराधयत्यलकापुरम्, उपहसत्यनष्टात्मभिश्च वसुभिरमरभवनम्, अनन्तैश्च भोगिभिर्भोगवतीम्।

यस्मिंश्च पौरा न मधुपायिनो दानरुचयश्च, न कृशानुगामिनः प्रकटितभूतयश्च, न भङ्गुरभोगवृत्तयो भोगिनश्च, न बहुभाषिणो[1] बृहत्कथाव्यसनिनश्च, न जलाशयाः सेतुबन्धलम्भाश्च, न प्रमदस्पृशः कादम्बरीरसावितृष्णाश्च,[2] न सुरद्विषः काव्यदर्शनाभिरक्ताश्च, न[3] मन्दद्दष्टयः समन्दाक्षाश्च[4] विश्रुतबहुश्रुताश्च रामायणविदो रामाशुभापातानभिज्ञाश्च, दृष्टमहाभारता भीमगदाभिघातवार्त्तामुग्धाश्च, प्रमाणविदश्छलव्यवहा(र?रा)पण्डिताश्च सर्वविरोधैकायतनमधिवसन्तो निर्विरोधरमणीयमभ्यस्यमानपुण्यकर्माणः प्रतिवसन्ति।

यत्र च सरसि चित्रायण्यां कात्यायनस्य भगवतो हुताशनस्यात्मजस्याभिषेकहेतोरमरलोकादंशेनावततार मन्दाकिनी।

यस्मिंश्च बह्वाश्चर्ये सप्तच्छदपादपः कामयमानकामिनीकपोलपाण्डु[5]र्वाति मधूकपुष्पम्(?)। पुष्पपुरं च तत् पुष्कर इवानन्तभोगमुत्कृष्टसैन्यवाहनो हरिवाहन इव सुकृतिनां पदं कृतागस्थिरपक्षच्छेदनः, नरवाहन इव पुण्यजनाश्रयं निधीश्वरः, हरिदश्व इव उदयस्था(न)मर्च्यमहाप्रभावर्षिपादः, गन्धवह इव घनक्षयमशेषक्षि(त? ति)परागविकारविध्वं(सि? स)नः, हैमवत इव रत्नाकरमखण्डपक्षः, शेष

1. A reads बहुल. page 11.
2. ,, रसा न दृष्टयः. page 11.
3. This may be amended as न मन्ददृष्टयः.
4. Our Ms. reads समदाक्षाश्च.
5. A reads पीत. page 11.

इव भोगिनिलयमखिललोकधृतिकरः, कुसुमायुध इवोज्ज्वलप्रमदवनमात्मगुणाभिभूतफाल्गुनश्रीः, चक्रवाक इव पद्मालयं मण्डलैकगतिरध्यतिष्ठद् आत्मयशःकुमुदभूषणभुवनसरःक्रीडैकराजहंसो **राजहंसो** नाम राजा।

यमतिमानुषाकारसम्पदमसह्य(पा ? पौ)रुषं च हरनयनहुतवहोष्मानुबन्धसम्भूतप्रतापशमनं[1] पुनर्जातमिव मीनकेतुं मेनिरे प्रजाः। येन च गोवर्धनधरणीधरधारणोद्दामदामोदरदर्पदमनायेवारोपितभुवनभारमधरीकृतमेरुगौरवं भुजभूधरयुगलमनारतं बिभराञ्चक्रे। यश्च रयनाथरकरचरणप्रभाभिरभिनवबन्धुजीवपाटलाभिर्निजवक्षःस्थलनिवासलाभनिर्वृतलक्ष्मीविस्मृतानि कदर्थयाञ्चकारेव कमलकाननानि। यस्य च मत्तमातङ्गतुङ्गकुम्भकूटपाटनेषु सुभटमण्डलपृथुलोरःकवाटभित्तिभेदनेषु वरतुरगबलप्रलयसागरोर्मिव्यावर्तनेषु स्यन्दनवृन्दवज्रपञ्जरभञ्जनेषु च व्यापारितः तदायासपिपासित इव समरमण्डलेषु बाहुदण्डो मण्डलाग्रमेचक....[2] पुञ्जकञ्चुकितः केतकीमुकुलधूलिधवलमरियशःक्षीरसागरमशेषमाचूचुषत्। यश्च सम्यक्प्रणीयमानवर्णचतुष्टयोऽपि क्षीरसागरप्रलयपू....[3]यशाः सर्वश्वेतं जगच्चकार। यस्माच्च सर्वस्वमर्थिनोऽभयमरयः, पराजयमिन्द्रियाणि, कदर्थनां कलिरास्यं सरस्वती, हृदयं मित्रवर्गः, सर्वमेव च शरीरं महा[पुरुषलक्षणानि प्रत्यव][4]....दन्धगजघटाभिः कण्ठरज्जुकषणखण्डिततत्वचो गण्डमदसिन्धुरंहोजर्जरितजटिलमूलसंहतयः स्थूलकरावलनकवालप्रवालमुण्ड[मूर्द्धानोद्धूतप्रसूनमुकुलपल्ल][5]....लङ्काङ्कारमिलितवल्लरीविश्लेषविषण्णमदविदाहविनोदाभ्य[6]मस्तकघातभग्नस्कन्धमुक्तरटिताः

1. A reads व्रत....पुन॰ page 11.
2. L. about 2 letters.
3. ,, 4 letters.
4. L. about 6 letters.
5. ,, 14 letters.
6. A reads विनोदाज्य॰ page 11. We may read अभ्यस्तमस्तकाघात॰

पटुतरपीडोविप[1][ते व्यसरन्नपि मन्ये काकुत्स्थकपि ](?)....[2]मुद्रवेलावनद्रुमाः। यश्च के (पद्म ? वल)मवनेरेव गोत्वमापाद्य गर्वितो वेनसूनुरिति ऊर्जिताशयः शशिकरशिशिरगुणैर्दिवं पृथिवीं दिशश्च सर्वाः सुरभीच....[3]न्वाय्यातिक्रमश्च न वर्णव्यतिकरो नवर्णव्यतिक(रंच ? रश्च) न राजाविनयशङ्का नराजाविनयशङ्काश्च नाशनचिन्ता नाशनचिन्ता चाजनि प्रजानाम्। यस्मिंश्च....[4]पाकशासनोऽपि नावग्रहं शशाक कर्तुं किमङ्ग पुनरन्ये।

स च राजा सकलराजमण्डलग्रासराहुजिह्वया संरम्भदज्वलनसंभारधूमलेखया मानमत्तमतङ्गजदानपट्टिकया प्रतिबलरभसाभिपातविहतिवेलावनरेखया[5] रिपुजीवितमधुचूषणभ्रमरमालया भुवनमहानिधानरक्षणभुजङ्गवध्वा युद्धामृतमथनप्रथमकालकूटोद्गमश्यामिकया निजभुजाचलशिखरनिलीनमेघराशिकया वीरकामुकविजयलक्ष्मीसङ्केताभिसरणात्रियामया यममहिषविषाणभीषणाकारया खड्गरेखया कामदूत्येव चतुस्समुद्रमेखलां सङ्कुलशैलकु(च ? न्त)लां सकलकुसुमसंभार(ह ? भ)रितारण्यधम्मिल्लबन्धाम् अन्तरिक्षनीलांशुकोत्तरीयां विश्वामित्र विश्वंभरां प्रसाध्य विश्रान्तः प्रेमवत्सु पितृपैतामहेषु समस्तशास्त्रविस्तारविविक्तबुद्धिषु सकलकलावगाढवैचक्षण्येषु (द ? दु)ष्टराजलक्ष्मीकरेणुकाविजयनिवारणाङ्कुशेषु दण्डनीतिप्रयोगचतुरेषु महावराहचरणेष्विव पदबन्धविधुरितभुजङ्गलोकेषु तरङ्गमालिष्विव प्रवरगुणरत्नराशिसंभवेषु निसुम्भसूदनबाहुदण्डेष्विव श्रीरत्नहरणकारणभूतभूभृन्मण्डलावलम्बनेष्वैरावतविषाणकाण्डेष्विव गुरुप्रतिमानेषु सुमतिसुमित्रसुश्रुतसुमन्त्राख्येषु मन्त्रिमुख्येष्वासज्य राज्यभारमभिनवयौवनोपदिष्टेन रागवर्त्मना मन्मथप्रतिमकान्तिरन्तःपुरेष्वरमत।

1. A reads पीडावि. page 11.
2. L. about 8 letters.
3. „ 10 letters.
4. . 3 letters.
5. A reads अभिघातवेला. page 12.

आसीच्च तस्य महीपतेः समस्तसीमन्तिनीवर्गदेवतायमाना मालती-कुसुमदामकक्ष्यामप्यतिक्रम्यान्योन्यसदृशसौकुमार्यैरवयवै[ [1] रसाधारणमार्दवाभ्यां च ....मानसाभ्यामुपेता तथा सुकुमा...भ्रुवै ]व कार्मुकं, मुखच्छाययैव चन्द्रमसं, श्वासेनैव सुरभिपरिमलं मलयमारुतमवधून्वती, बिम्बाधररागबालातपभीत-कुण्डलितान्धकारभारनिभेन [2] स्वभावसुरभिणा नवाभ्रजालेनेव सरत्नमेखलविपुल-शिलोच्चयनितम्बचुम्बिना मदनव्यालहस्तिबालहस्तेन [3] पत्यभिसारदुर्दिनमिव दर्शयन्ती, वदनचन्द्रमण्डलहठावकृष्टपुण्डरीकलक्ष्मीस्नेहानाद्रुकाभ्यां (?) मृणालिकाभ्यामिव शिरीषदामकोमलाभ्यां भुजलताभ्यामुद्भासमाना, सर्वशरीर-संविभक्तशेषाभ्यां सौन्दर्यपुञ्जाभ्यामिव स्थापिताभ्यां हरदग्धमनोभवौद्धत्य-सारकोशाभ्यामिव तथाकृतोपयोगाभ्यां धात्रा चन्दनधवलसुधालेपौचित्याभ्यां निवासकुम्भाभ्यामिव रागस्य स्वच्छमानसरसातिरेकपूरिताभ्यामिव गुरुतराभ्यां पयोधराभ्यां भ्राजमाना, गजकुम्भकठोरपीवरकुचातिभारसाधर्म्यविपरमाणुत्वादे(?) ध्रुवमभङ्गुरां बिभ्रती मध्ययष्टिम्, अतिघनजघनाभोगभारखिन्नो[ रुदण्ड ]-[4] स्थिरीक्रियोपयुक्तभूयोवयवत एव तनुतरीभूतेन जङ्घाद्वितयेन राजमाना, प्रणयकलहताडितप्रियतमहृदयोज्ज्वलितरागलिप्तयोरिव न[खचन्द्रदशकरश्मिनाली-कसहस्रचूषि ]तेनाशेषभुवनवारिजवनप्रभासञ्चयेनैव सततमाप्यायमानपाटलिम्नोर-मलरागलावण्यच्छलाद[ रुणाशोकपादपेभ्यः स्तबकराशीनिवं दोहदपूरण ]ताडनेषु दातुं संगृह्णतोः मुखकमलामोदनिर्जितवसन्तकरदत्तमिव सर्वपल्लवसौकुमार्य-मुद्वहतोश्चरणारविन्दयोर्द्व[ न्द्वेन सैन्धूरीरिव दूरभवः (?) कुर्वती, तरङ्गमयी भ्रूपताकयोः], इन्दीवरमयी नयनयुगे, रक्तोत्पलमयी दन्तच्छदे, कुमुदमयी

1 There is no lacuna in our Ms. But obviously some portion is missing.

2. A word like कुन्तलभरेण· denoting the hair seems to be missing here.

3. A reads पर्यभिसारदुर्दिनमुपसारयन्ती. page 12·

4. ,, भुक्त· page 13·

ईषस्स्मितेषु, सौगन्धिकमयी श्वसितेषु, अमृतमयी वचसि, प्रसादमयी मनसि, चक्रवाकमयी पयोधरयोः, [आवर्त्तमयी नाभिरन्ध्रे, पुलिनमयी] नितम्बतटेषु, पुष्करमयी च पादतलयोः, अमरसद्मन इव राजहंसोपभोगायावतीर्णा मन्दाकिनी, लीला(करा ? कला)कान्तिरागचातुर्याणि पञ्चैव प[ञ्चभूतस्था]ने प्रतिविधाय निर्मितेव प्रजापतिना, प्रावृडिव घनगम्भीरस्तननाभिरमणीया, शरदिव सरसां कान्तिमुद्वहन्ती, हेमन्तवृत्तिरिव प्रालम्बिनीहारमालिनी, शिशिरश्रीरिव नवनवमालिका, वसन्तवेलेव चारुभुजवल्युल्लासभूषिततनुलता, धर्मसम्पदिव कोमलपाटलाधरा, सर्वर्त्तुसमवृत्तितयेव नन्दनस्वभावा, सर्वावरोधजनप्रधानभूता रतिरिव कन्दर्पकस्य, शचीव शतमखस्य, शैलसुतेव विश्वेश्वरस्य, लक्ष्मीरिव पुष्करेक्षणस्य, बुद्धिरिव धनाधिपस्य, देवसेनेव सेनापतेः, गौरिव प्रचेतसो, रोहिणीव बुधभवनस्यारुन्धतीव शक्तिगुरोरसुभ्योऽपि वल्लभा देवी **वसुमती** नाम ॥

तस्मिंश्च सम्राजि राजीवलोचनया तयान्याभिरप्यविकलकलाशालिनीभिरविरुद्धानेकधर्मार्थो(र्थ ? च)नतिसङ्गमङ्गजसुखमश्नुवाने कदाचिदभिषेक्तुमिव दिग्जयाय पुष्पजमाजगाम[1] द्रुमलताधृतैर्मधुनिवहवाहिभिः कुड्मलपुटघटसहस्रैः कुसुमलक्ष्म्याः समयः । मध्ववतारवेगोद्धूतमिव हिमजलं जगाल । दक्षिणामप्युपेक्ष्य दिग्वधूमुपेयुषि पटौ पतङ्गेऽतीवोरुतरमुत्तराशा सौभाग्यमुवा(च ?)ह । दिनकरविरहे समगृहीताया[2] दिशो दीर्घनिश्वास इव मन्दमन्दमुत्ससर्प तप्यमानपान्थजनो मलयमारुतः । मलयमरुत्प्रेरितेन स्मरवैश्वानरेणैकभवन इव त्रिभुवने सुरासुरमुनिमनुजमादीप्यमाने तद्दाहप्रतीकारक्षमाणि पयोधरकलशसहस्राणि शरणमेकमचकमत कामिजनः कामिनीसमाजस्य । चित्तोपसृतप्रियोष्ण[3]

1. Does this word denote Madana ?
2. Shall we read तमगृहीतायाः.
3. A reads चित्रोपसृत. page 14.

बाष्पवारिपूरप्लुतेषु प्रोषितानां हृदयेषु पाययितुकाम इव कामज्योत्कर: प्रकाम-[1]दीप्तानिषून् चिक्षेप । सहकारतरुतलास्तीर्णकिसलयशयनशायिनीनां कामय(मान)-[2]कामिनीनां कामश(री ?)रक्षतेषु क्षारक्षेप इव मर्मसु मधुरसविसरः परभृतनख-मुखोद्दलितकुड्मलगर्भनिर्गलितः पपात । तस्मिंश्च समये रतिसमरविधिविशारद-कुसुमशरशिबिर[3]नीराजनज्वलनज्वालावलीषु च राजपुरन्ध्रि(ज ?)[4]माहारजतोत्तरीयांशुकपदीषु[5] सकलजगत्प्लावनोद्वेलरागसागरतरङ्गवेणिकासु विकसन्तीषु रक्तकुरवा-[6]शोकशल्मलीपलाशवादिभद्र[7]डाडिमजपाराजिषु, रमणी[8]चरणनलिनताडिताशोकरोष-प्रोत्साहिताशेषवनसमाहृतशशिकरकलाविभ्रमेषु, निरन्तरपतच्छिलीमुखप्रकर-जर्जरितन्यक्षवन[9]विविधवृक्षविग्रहधवळक्षेपदुबन्धेषु, अन्धकमथनमन्युमन्युक्षितेक्ष णाशुशुक्षणिक्षपितहृच्छयोच्चयभस्मभासुरेषु स्मेरेषु करीरकेसरेषु, सिन्दुवारवकुलसा[लतिलक]नवमालिकादिषु, ललितमाधवपानवासक्ति मधूक[10]वनस्थली-दिष्टिवृद्धिपिष्टातक[11]प्रकरेस्फुटदन्तिकटकिङ्किरातकर्णिकारचम्पकप्रकरेषु(?) स गज । मत्तवा[रण इव वशाभिर्मत्तकाशिनीभिः परिवृतो] मधुमत्तमधुकरक ्म्बकान्व कारितक्रोडानि क्रीडावनान्यवगाहत ।

तत्र च मदरक्त(कत ? तम)[12]कामिनीकपोलरागसन्ध्यागमविधुरितसरश्च-[क्रवाकमिथुनकानि बध्नत्पानगोष्ठीमण्डलानि] त्रिदिवमेदिनी(म ? मा)नोज्ञकान्तर-

1. A reads प्रकामानिषून्. page 14.
2. See supra कामयमानकामिनी. page 20.
3. Our Ms. reads शिल्पिविर.
4. A omits ज after राजपुरन्ध्रि. page 14.
5. A reads अंशुकवतीषु. ,,
6. ,, कुरवक. ,,
7. A reads पारिभद्र. page 14.
8. ,, रमणीय. ,,
9. ,, न्यग्रमपवन. ,,
10. Our Ms. reads मधुक.
11. A reads वृद्धिविघातक (पिष्टातक?) प्रकरे(र)स्फुटाभिकट. page 14.
12. ,, ततकामिनी. ,,

दिदृक्षया कौतुकादिवाव्यवस्थितगगनानां खेदस्वेदि[ वा ! ता ]लक्तकरक्तमेघ-[1] पल्लवानि भ्रान्तकुन्तलभ्र[ मितदुर्दिनो . . . . गीयमानस्ववि ]क्रमापदानानि पश्यन् यन्त्रदोलाप्रेङ्खितानीर(!)कोमलकु(सु)मकिसलयोत्तरच्छदासु[2] विलोल-पल्लवान्तरप्रविष्टपवनान्दोलितलतागृहोदरमणिवे[. . . तची ]नांशुकान्तरीयाणामपि[3] करनखमणिरश्मिसंवलितरत्नमेखलामयूखजालजल्पितदुकूलकर्मणामन्तःपुरसुन्दरीणा-मारणितरलशर्करीतुलाकोटिपारिहार्याङ्गदानि प्रेङ्खोलितहारदीधितिप्रकरकर्पूरचूर्णा-वमुच्यमानश्रमस्विन्नकुचतटानि मधुरविवाददत्तदन्तच्छदच्छिन्नसन्धिप्रतिसमा-धानदत्तसदयलीलाचुम्बनानि गाढालिङ्ग(न)मृदितकण्ठदामप्रतिनिधीकृतप्रियतमे-क्षणकुवलयस्रञ्जि मञ्जुविहङ्गभङ्गिरातिप्रपञ्चमूर्च्छिताङ्गजविदाहवेगानि राग-साम्यसमाहितरसोत्कर्षाणि राजवृषो रतानि निर्विशन्नुपवनाविषयिणीमृतुविभूति-मनुबभूव ।

प्रवृत्तयोश्च विचित्रपुष्पयोश्चैत्रवैशाखयोर्दैत्यराज्यमिव शुचिशुक्रमयं, यमसौराज्यमिव प्रतिदिनमरुणायमानेनकरविरसीक्रियमाणलोकं, रक्षोराज्यमिव परिलघुप्लवङ्गलङ्घ्यमानहीनवाहिनीजलं, किंपुरुषराज्यमिव द्रुमगणगुरूष्मवारण-वनोत्सेकरागहर्षकिंपुरुषं, मन्मथराज्यमिव मरुद्गणभ्रमितपत्रमण्डलोपरुद्धसुरभव-(न)मुग्रातपमनुबुभूषुः उत्फुल्लकमलरक्तोत्पलानि प्रदीप्तानीव घर्मभयप्रविष्टेन कन्दर्पानलेन, दलशीतलजालिकाजातशीतलजलतलानि(!) दारुणनिदाघगलित-शिशिरकारागृहाणीव मधुकरकुलबहलकालान्धकारकालोदराणि करतलोदरीभिः सह सरांस्यवजगाहे ।

1. A reads अलक्तकमेघ. page 14.
2. „ प्रेङ्खितानां कोमल. page. 15.
3. L. about 7 letters.

प्रविशन्तीषु च प्रणयिनीषु प्रियसखीष्विव प्रत्युदस्थुः प्रसारितोर्मि-हस्तदत्तगाढकण्ठग्रहा वाप्यः । प्रबलविपक्षविक्षेपवारिदुर्गप्रतिस्तब्धैः प्रसभमिवो-दीर्णदण्डैः पुण्डरीकैर्विमुक्तास्तत्प्रतिद्वन्द्विषु मन्दशङ्कं सुन्दरीमुखेषु शिलीमुखा निपेतुः । निजमज्जनाभ्युपायव्यसनितस्य[1] पुरुषपातनिष्पर्धरंगणस्य • भोघा भ्रान्तिदिदृक्षवः कटाक्षा[2] जम्बामो (?)गर्भशायिनीनां पक्ष्मलाक्षीणामुदवर्तन्त क्षोभतरङ्गितास्तरुणशफरकाः । नृपनितम्बिनीबिम्बाधरचुम्बिनो नाभिजज्ञुरति-चपलाः सरस्तरङ्गाः अर्थमानमानमानसम्(?)[3] अपितु विकसन्तो विसर्पिणां रागमूहुः[4] । प्रतिमुखस्थितकुवलयकोपादिवा[5]तिवामानि भामिनीनामरज्यन्त लोचनानि । चकोरलोचनाकुचारोहचक्रसम्मर्देऽपि कलुषीभवद्भिरम्बुभिरौत्प-त्तिकत्वं जडत्वमनक्षरमाचचक्षे । गुरूनपि निरपेक्षो जघान वारिवेगो वरोरूणामुरोरुहभरान् । न हि विवेकः क्षुभितस्य । जलमध्ये मौनमाचरन्तो मेखलाकलापाः स्थान एव गुणत्वं समर्थयाम्बभूवुः । अपास्तालक्तकै-[6]रपि रागेणैव दशनच्छदकिसलयैर्व्यजीयन्त रक्तकुवलयवनानि । ह्येषामनेकशो रतिरणप्रणीतोत्थितानां प्रतिस्पर्धिजये सहायकृत्यम् (?) । इत्थं च वर्त्तमानासु वरपवतुणीतीनां वक्रव्यतिकीर्णापि विकीर्णितोर्मिषु करपुटसलिलसेकलीला-भूतालिकासु प्रहेलिकासु(?) महीशोऽपि महावराह इव वहन् वक्षसा वसुमतीं देवीमाकुलाकुलामालोलयन्नप[श्चचाल । चिकुरांसतटश्चिक्रीड] क्रीडासु प्रकीर्णप्लुतनिम्नगाधवस्यास्थलव्यचारपतितद्रव्यविचयव्यतिकरभेदादष्टमार्गया जल-

1. A reads निमज्जनाद्युपाय. page 15.
2. ,, कटाक्षानम्भोगर्भ· page 16. Shall we read कटाक्षा इवाम्भोगर्भशायिनीनां.
3. ,, अर्थमानानामाननमपि· ,,
4. ,, मार्गमूहुः· ,,
5. A reads कोशादिव. page 16.
6. ,, अपास्तालक्तकैः केनापि निरा-शेनेव. page 16.

क्रीडया। तत्प्रधानाङ्गेषु च [स्फुटगद्गदगम्भीरभेदादिस्वरेण] निगृहीतामुक्तसंज्ञेन सलिलवाद्येनानेकमधुरकरणरमणीयेन[1] रममाणं रमण्यः काश्चित् करपल्लव-सम्पुटोत्पीडितमुक्तैः [प्रीतिपल्लवद्वैरिवैनं धाराजलैः] ....[2]गुरश्शृङ्गकोणमुखमुक्ताभिः कुङ्कुमजलधाराभिरनङ्गपन्नगमुखशिखिशिखाभिरिवावचकरुः । अपरा विपक्ष-[3]व्यञ्जितवि[लासरागरोषिता रक्त]कटाक्षमालाभिरेव जिह्मनाम्नीभिः कौसुम्भ-सरिद्भिरिव सरभसा विधुरायमाणमाचक्रुषुः[4]। इतरास्तमसीव पयसि दुर्विभागगतयः करतलकमलावष्टम्भप्रसक्ता याहच्छिकैर्नाम तच्चरणमूलघट्टनैः स्पर्शातिशयानुमेय-मानप्रार्थनाप्रणिपाता न कृपणमन्वतिष्ठन्त ।

[5]अवनिपो गर्विता व्याकुलयन्, मुग्धाः सन्तारयन्, भीताः समाश्वासयन्, कुपिताः प्रसादयन्, मुदिताः प्रोत्साहयन्, प्रस्थिताः प्रतिरुन्धन्, कासांचिदु-त्पलाशां वल्लीमिव सफलयन्, कासांचित् पद्मरागं रत्नमिव सम्पादयन्, कासांचिद-मन्दमारभमनो(?)रंशुकान्यलक्ष्यगतिराक्षिपन्, कासांचित् कमलरजस्सङ्गधूनन-च्छलान्निरञ्जनस्निग्धताम्रतरळताराणि नेत्रोदराणि चुम्बन्, कासांचित् कामायतनेषु कामशरानिवादृश्यपातान्नखानर्पयन्, निबिरीसविलासश्चण्डातक-परिहितः पर्याकुटिलकुन्तलोत्तरापाङ्गलोचनः कुङ्कुमरागलोहितौघप्लुताङ्गः सन्त्रासित-सकलराजहंसनिवहो विहृत्य समरादिव सरसः सह(प्रयाभिज्ञं? प्रियाभिर्जय)-श्रीभिरिव निर्जगाम जगाम च।

[6]मज्जनानन्तरमनुष्ठितयथोचिताभिषेकमङ्गलो यथाविध्युपस्थाय तिग्मभानुं, भगवन्तमुपास्य चित्रभानुम्, अभिराध्य च देवं देवकीसूनुं, सह सुहृद्भिस्त्वगनु-सारिणा सुरभिचन्दनरसेन कृतसमालम्भनः कुशलसूदसाधितेन शोधनकल्पनप्रक्षा-

1. Our Ms. reads वाद्यानेक.
2. L. about 14 letters.
3. Our Ms. reads विलक्ष.
4. A reads आचुकुशुः. page 16.
5. ,, अवनिपोऽपि ,,
6. ,, आमज्जना. ,,

लनप्रतिस्तम्भनमार्दवकरणशीतीकरणप्रसादनस्नेहग्रहणवर्णक्रियागन्धोपसंहारषड्वर्ग-सम्पादनस्नेहविचारपङ्क्तिसंज्ञाभिस्त्रयोदशविधाभिरनेकावान्तरविकल्पाभिः क्रियाभि-रुपसंस्कृतेन स्वात्मोचितेन सरसं स्वाद्येनामृतातिशायिना पटुपाटलपरिमला-मोदनिर्हारिणा स्पर्शानुमेयेन पानीयेनाहितधृतिराधाय धूमवर्तिमाचान्तो बहळपारि-जातसौरभोद्गारिक्रमुकफलशकलानि शकवधूटीगण्डपाण्डुरां च ताम्बूलवीटिकां जरठपाटलीपुटक्रोडपाटलं च शङ्खचूर्णं त्र्यं च तिक्तकटुकविशदं विमर्दोष्णं लपन-लाघवकरं चोपयुज्य रज्यमानदशनावरणो मणिकुट्टिमपथेन गत्वा प्रसाधितं भुक्तास्थानमण्डपमतिमृदुनि क्षौमपाण्डुनि स्थानदत्तचीनपट्टोपधानके पुष्पवास-सुरभिणि हैमप्रीतिपादुकाप्रतिष्ठि(त)प्रवररत्नचित्रपादे पादपीठसनाथपार्श्वे प्रत्यासन्नसौवर्णप्रतिग्रहे शयनपर्यङ्कतले मुहूर्तलब्धविश्रमः सन्निहितेष्टसामन्त(ः) चित्रालापचिरविनोदितो विसृज्य णद् (?) विलम्बमाने कदम्बमुकुलकिञ्जल्क-पुञ्ज(र?)त्विषि त्वरितप्रवर्तितस्यन्दने सन्ध्यामुखचुम्बनाभिलाषिणि क्रमेण मन्दाय-मानोष्मणि[1] मणिशिखासुकालोकलोपनेव(?)[2] सुखविविक्तोद्गन्धिनैपथ्यरमणीयेन विजृम्भमाणमल्लिकामुकुलदामप्रलम्बोत्तरीयरमणीयेन सुन्दरीजनेन चन्दनसलिल-संक्षाळनशिशिरेषु सेरमल्लिकोपहारेषु सौधहर्म्येषु (सु?[3])मगंस्त । सङ्गीतगीत-गोष्ठीभिश्च प्रियविदग्धसुहृत्सखः प्रदोषमनैषीत् । [उत्तरयामद्वयमुन्मद] मञ्जुवादि-नीजनमनोविधेयवृत्तिरगमयत् ।

एवं च परिसमापितग्रीष्मस्याशेषशिरीषश्रीमुषः क्षपितकरञ्जमञ्जरीत्विषस्त्वि-षिमत्सोमगो[लकरतिरस्क्रियारम्भजजम्भकाजनाभिनिव]र्हणाज्ञा[विजृम्भि ]ताम्भोद-कोटयः कुटिलकोमलतटितो विघटमानकुटचकुड्मलामोदलिप्तककुभः केसरसुरभित-

1. Following this there should have been a synonym of sun in the locative case.
2. A reads सुखालोकलोचनेन. page 17.
3. ,, सुमंस्त संशित. page 18.

नभसः सुरचाप..[चन्द्रकिबर्होत्तरारसिता भुग्न्योपगुप्तार्कगोगणा][1]गणतिथद्दषातक-स्रजः(?)सुजातजातिजातयो मुदितमुग्धयूथिकावर्षन्नववार्षिकीलता ललितलाङ्गली-कलिका मुकुलितनिचुळवीथयः फलितपूतजम्बूपङ्क्तयः [विकचकदम्बचुम्बि]-वाचालमधुलिहः सलिलकणस्यन्दिमन्दमरुतो रुतमुखरभेकभेरीभीमागमनिशीथा निशिथिनीभेदाब्दुर्दिनदिना(?)द्रुतमनोभिसारिकाभिद्रुतदयितोदवसिता विकासितवलाका[लीब]वलितभुवो भिन्नसिलिन्ध्रबन्धना: सिन्धुरमामन्द[2]गर्जितघना-घनस्तनयित्नवो नवजलसेकनिर्वृतिविनीतकेतकीगर्भखेदाः पादचारक्षमश्यामल-शाड्वलवनस्थला नीलकण्ठनृत्तलीलाविलासिनः सन्नपन्नगकुलाः कूलमुद्रुजोद[3]-कोद्रवत्सरित्तरङ्गिणीशताः शतमखगोपावलीप्रवालमेखलाधृतवनस्थलीनितम्बपार्श्व-[4]विश्वविश्वम्भराङ्गारूढसरसः स्य[5] यौवनावनजपनवस्य सनदायिनो (?) दीयमान-दानवारियोगनिद्रासुखाः सुखमया इव प्रादुरासन् प्रावृषेण्या वासराः ।

(तासु ? तेषु) च ग्रीष्मातपातुरत्रिलोकलक्ष्मीविश्रान्तिधारागृहेषु वर्षावासरेषु कुटचकुड्मलहारमालिनीभिर्लम्बकदम्बकाञ्चीदामभिः केतकबर्हदन्तपत्र[6]भूषितश्रवण-पाशाभिर्मदमयललामलाञ्छितललाटिकाभिरार्द्रगैरिकरागरञ्जितचरणपल्लवाभिः कुन्त-लवलयिनीभिः सुन्दरीभिः कृतकिरातनितम्बिनीवेषविभ्रमाभिरटन्मृगेषु नटच्छिखण्डिषु, स्फुटन्नीपेषु, रटन्निर्झरेषु, वर्षजलधाराधौतरत्नोपलतलेषु क्रीडापर्वतेषु विजहार । धारारवद्विगुणबृंहितमदरागं च वार्षिकवृक्षवल्ली-गुल्मगुलुच्छकच्छन्नमार्गेषु कृष्णागरुसारधूपसञ्चारोष्णेषु मणिदरीगृहेषु मत्तरामा-द्वितीयो रेमे ।

1. L. about 3 letters.
2. A reads मन्द्र. page 18. Shall we read सिन्धुरामन्द्र.
3. ,, दकीद्रवत्. ,,
4. A reads पार्श्वापार्श्वविश्वम्भराङ्गावरूढ. page 18.
5. ,, पवनस्य....सन. ,,
6. ,, केतकदन्तबर्हपत्र. ,,

मण्डलचतुरश्रायतासु चावर्तवतीषु च रत्नमण्टपगर्भवापिकासु[1] कदुष्णवारिपूरितासु कनकपद्मशतावतंसितासु घर्म इव लीलया गन्धगजगामिनीभिः समं समक्रीडत। निबिडितासु च निशीथिनीषु मन्मथमथितधृतीनां दुर्दिनाभिसारिकाणामासारजलापराधक्लिष्टनैपथ्येषु गात्रेष्वादरप्रतिसमाधीयमानमण्डनस्तासां च स्वजनवञ्चनापदेशकौशलेषु श्रूयमाणेषु संहर्षेणेवासन्नकृतकर्लीकानीलांशुकावगुण्ठनस्यान्धकारराशेरुपक्रियायामुपन्यस्तायामात्मनि पुरुषाभिमानमारोपयन्[2], कचिद्भवनभित्तिस्पर्शपरम्परोन्नीतपद्धतौ कचित्तरलसौदामिनीदामदर्शितपुरोभागे कचिन्नागरिकपटहशब्दगम्भीरगर्जितमुहूर्तमात्रविह्वलावस्थाने कचित्प्रतिरोधकानामिवाम्बरग्राहिणां प्रथमाभ्राणामविरलशरवर्षासारसम्भ्रमाश्लिष्टमन्दिराङ्गणमार्गपादपस्कन्धे प्रसङ्गोदीरितरागाभिसरणसाहसे सानुकम्पप्रम(प?)दमापद्यमानः[3] स्वविशयोपचारसान्त्वनमहल (?) रसमनेकधा[4] सुरतलास्यमत्युदारतरलितविभ्रमं बबन्ध ।

बन्धागारगर्भादिवाभ्रपञ्जरान्निर्गच्छति पुनरुच्छ्वासभाजि भुवनेऽन्तर्गतैरावतप्रवग्न इव स्वस्तेमवने (?)[5] चिरनिरोधसम्पीडिकास्वतामामर्षितातकर[6]प्रतीकेष्विव (?) प्रक्षीणवारिषु वारिधरमहाह्रदोदरेषु, स्व....[मोद्घोष]णविरामभूकेषु[7] स्तो(कि?क)केषु, गलितपयोधरांशुकासु लज्जयेव कापि लीनासु ह्लादिनीषूदधिमहावलाहकाचूषितवर्षवारिपूरस्यान्तरिक्षसरसो [मरकतकुटीष्विव स्फुटीभवन्तीषु] नीलकण्ठकण्ठमेचकासु दिक्षु शुनासीरशरासनकलवर्णेषु शीर्णेषु शिखिबर्हेषु प्रतिबद्ध-

1. A reads चरणमण्डप. page 19.
2. ,, संहर्षेणावसन्न. ,,
3. ,, प्रमदामापद्य. ,,
4. ,, महत्वरस. We may read बहलरसं.
5. A reads गतैरापतप्रभग्न इव ध्वस्ते मेघवने. page 19.
6. ,, सम्पीडितस्वधामामर्षितार्त. ,,
7. L. about 5 letters.

मुकुन्दलोचनारविन्दवारितवारिधरभयेष्वि[व प्रवृत्तेष्वितस्ततो विजृम्भितमम्भोरुहवनेषु पन्नगेभ्य]इव निर्विषेभ्यः पयोदेभ्यो विहाय भयमतिपतत्सु रात्रिन्दिवमध्वनोऽध्वनीनेषु, सकलाब्दकलुषितासु बहुमुखासारपा[तावि...दत् स्वयमेव क्रमादु]पागतप्रसादासु चिरक्षोभानुबन्धलज्जयेव मन्दमन्दं वरुणालयमुपसर्पन्तीषु प्रतनीयसीषु फेनमालिनीषु, मधुपानमादबन्धने मदगन्धविदग्धविशारदे शारदे विदारयति मनांसि मानवतामनङ्गवारणानीके सप्तपर्णवने, कुसुमधवलमूर्तिषु कुसुमशरशरावलीष्विव (वि)रहि(त?)जनहृदयदारिणीषु समन्ततः पतन्तीषु हंसमालासु, वसुधाविभ्रमहेमचूर्णैरसनरेणुभिरभिनवमनभिजातुराग्वि(भ? व) सुभगदर्शनासु वनस्थलीषु बाणमालिनीरिषुधिरिव मनोभुवो भुवः परिहरत्सु माधिच्छेदशङ्किषु(?) स्वमुखानेकवारोदीरितमधुरशात्कृतिग्राहिणीनां शुकश्रेणीनामचकितमुक्तमञ्जुलप्रतिशात्कारशासितास्वनुमन्यमानकलमकणिशभङ्गासु कलमगोपिकासु, सकलकामुकानीकोत्कम्पकारिणीं खड्गधारामिव श्यामामालम्बमाने द्विगुणतेजसि ज्योतिषामधीशे, शान्तगर्जितानि शशाङ्कपादच्छायाश्रयीणि शाल्मलीतूलपरिलघूनि मेघकुलानि विलोक्य दर्पादिव मत्तमधुकरीमधुरध्वानगर्भं हसन्तीषु कुमुदिनीषु, विशदायां शरदि शारदशशिकरासितचन्दनधवलहिमजलबिन्दुशीकरशीतलासु श्लथमानशिशिरशेफालिकोपहारहासिनीषु हर्म्यमालासु मधुभाषिणीमधूनि माधवानुभावपूर्णेष्वपि मनोमणिचषकेषु स्वकरतलोपधानच्छायोपरक्ता रिक्ता इति मुग्धयुवतयः क्षणमनीहमानाः पातुमस्थुः(?) । प्रहसता पुनः प्रियेणावार्यन्त । मत्तकाशिनीवक्राम्बुजचुम्बनाशयेवासव(ता ? तर)ङ्गमालासु छायामयः पपात राजहंसः । सह मधुना सुवदनाभिपीत एव प्रतिमासु शशीत्युन्मदानां तासां

---

1. A reads मयेष्वि· page 20.
2. ,, प्रसादसुचिर. ,,
3. ,, सुभगासु वन. ,,
4. A reads हरत्सु समाधि. page 20·
5. ,, मत्तमत्तकाशिनी. ,,
6. ,, सुवदनाभिपीत एव प्रतिमाशशी· page 20·

रुरुदुरिव स्वादापदेशा(दा)ननेन्दवः। तथा स्निग्धाः सन्तोऽपि पश्यन्त एव तारापतेरात्मनि संक्रमास्तीस्तरलतारास्तारका(?)[1] न प्रत्याचचक्षिरे मृगाक्षीणां प्रक्षरितस्वेदबिन्दवो मुखेन्दवः। कस्य वा स्त्रीनिमित्तं न हि विघ्नन्ते प्रीतयः। सोऽपि सोमत्ता इवानुसरन्निपत्य तत्रै(व) सममज्जत्। न त्वशकत् प्रत्याहर्तुम्। स तैरपि तारान्तरसङ्क्रान्तिमन्थरैर्वेलम्बळ(?)[2]नितम्बिनीनां वदनपङ्कजैः कुमुदबान्धवः। फलितं हि गुरुतल्पगस्य तस्मिन्नेव देहे पातकमर्हति(?)। (हि)मकर-पराभवदर्शनप्रविष्टा इवान्धकाराकृतयो ननृतुर्नतभ्रुवां भ्रुवः। सुधीरोऽपि रिपुव्यसने हर्षाद्विक्रियेत, किमुत निसर्गचञ्चलाः[3]। कपोलसङ्क्रान्तचन्द्रश्चन्द्रोदय इवोन्मदाना-मुन्मीलितकुमुदकाननो वराननना(ना)माविरासीदमृतसम्मितः स्मितोद्गमः। मदिरा-तरङ्गभङ्गरङ्गं मृगाङ्कलक्ष्मणि चक्रे दूरमग्नसहचरप्रिया कृपणबद्धदृष्टिपु करुण-मारसन्तीपु भ्रमरकामिनीपु कलगिरोऽपि मदकलास्तथैवान्वशोच(य?)न्[4]। प्रहस-त्प्रियप्रबोध्यमानाश्च याथार्थ्यज्ञानयोगात्[5] छोकितकुरङ्गलाञ्छनाः[6] तमपि प्रबुद्धबन्धु-जीववनवि(ल?ड)म्बिना स्वलोचनप्रभासञ्चयेन समुच्छाद्य तत्राप्यदृश्यमानमृग-कलङ्का भङ्गुरिताक्षीभ्रुवो(?)[7] वञ्चकास्मान् वञ्चयस इति कर्णकुवलयैः कान्तमंसयो-रताडयन्।

असा[वपि प्रियतमोपहृता]नवनवजवारुणीगण्डूषपानरक्तगण्डो गण्ड-लग्नरजतपुण्डरीकमिव कर्णचामरविभ्रमं प्रतिबिम्बमृगाङ्कममलं दधानश्चन्दन-धवलमूर्ति[रिन्द्रवारण इव मन्दाकिनीपयसि चन्द्रिकाजालके] विजहार।

1. A reads संक्रामन्ति तरल. page 21.
2. ,, र्थ्येलम्बत नितम्बिनीनां ,,
3. ,, चपलाः ,,
4. Our Ms. reads तथेत्येव.
5. A reads ज्ञानार्यागात्. page 21
6. ,, येगितकुरङ्ग. ,,
7. ,, कलङ्को भङ्गुरिताक्षिभ्रुवो ,,

हरिणधरकरपुटावसिच्यमानामृतलवापनीयमानखेदश्च राजपेशलातिशिञ्जानवलय-मञ्जुलमञ्जीरकाञ्चीगुणानि गर्जदङ्गजानि [1] ब....[2]रतानि रात्रिश(?)[3]तान ।

तदनु तामरसवनानि पाणिवदनपुनरुक्तदोषपरिहारार्थमिव संहरन्नबलालोच-नद्युतिविलम्बनदुरवलिप्तानि कुवल [यवनानि मृद्नन् दारुण] [4]शरदातपद्रावितजली-कृतानि घनकुलानि तुहिनशीकरव्याजादिवा(व)किरन् हिमकरगृह्यतयेव सर्वौषधिषु गौरवमारोपयन्नीहारद्रोहादिव नित्योपगूढपावकान् वनस्पतींस्तिरयन् , निजरिपुवा-रिजन्मवर्धनरुषेव जलान्युद्वाष्पयन् , सपक्षानुजिघृक्षयेव निसर्गशीतलानि मौक्तिका-भरणानि [5]विश्रमयन् , अखिलजीवलोकतरुकुलताषण्डफलभराकाण्डलुण्टाकडामरीक-दमनदीक्षित इव पतिमण्डलानि सङ्कोचयन् , सकलत्रिभुवनरसहठापहारपराभव[6]-दुर्विकत्थनं तस्करमिव भास्करं निरुन्धन् दिवि, नतवाल्भ्यवर्धितानि दिन-विदाहविस्फूर्जितानि वर्तयन् निगृहीतसर्वसत्त्वस्वच्छन्दपर्यन्तः संवृतप्रायसर्वारम्भो व्यजृम्भत स्वभावशीतलो हेमन्तसमयः ।

तस्मिन्नपि समये दलितहिमजालिमद्भिः(?)अनलज्वालाकबलितमलयजैघसा-मायसीनां हसन्तिकानां सहस्रैः सन्निहितविलासिनीयौवनविदाहावाहितनिदाघे-ष्विव महत्सु मन्दिराभ्यन्तरेषु तुहिनपटलातिभारभयनिलीननभस्तलास्विवानवरत-दह्यमानकृष्णागरुबहळधूपदुर्दिनान्धकारासु मलिनदिगङ्गनामुखविलोकनाक्ष(म)[7]त-येव गाढविवृतगवाक्षेक्षणासु प्रासादपङ्क्तिषु गन्धतैलावसेकसुरभिगन्धिभिः करतल-कलिताभिर्दीपिकाभिर्लोकसङ्कोचकृतो हेमन्तरजनीरिवान्विच्छता परिजनेन परिवृतो यथर्तुवेषः स(ह) महिष्या महार्हं शयनमारुरोह ।

1. A reads गर्जदङ्गजानिव भङ्गिमन्ति भङ्गुरितमाद....वलिप्तानि page 21.
2. L. about 12 letters.
3. Shall we read रात्रिषु.
4. A reads शरदातदपत्राणि कज्जलीकृतानि घन page 22.
5. A reads विभ्रमयन्. ,, 22.
6. ,, हठापाहर. ,,
7. A reads विलोकनाकुलतयेव. ,,

तस्मिंश्च रक्तनीलधवलकान्तिना प्रियतमेक्षणार्धप्रभासञ्चयेन[1] चित्रकञ्चुकेनेव छाद्यमानो, हृदयविजृम्भमाणमन्मथहुताशनोद्गारकल्पेन तत्कालोचितेन कुङ्कुमाङ्ग-रागेणेव रागेणाधरपल्लवस्यानुलिप्यमानः, कर्णकथनीयमन्मथगुह्याख्यानेषु कुन्द-कलिकाभिरिव स्मितमयूखमञ्जरीभिः क्रियमाणावतंसः, क्षणमधिवाह्य प्रणय-कथाभिरुपपादितरतोत्सवोपकरणासु निर्गतासु परिजनवधूषु मधुरचुम्बनोपक्रम-प्रवृद्धरागावेशो, विवशस्फुटपतितदशनपद्धतिरुद्भूतवेदनाकलहितलाभपल्लवा(?)-द्विगुणपीडिताधरमणिमुखग्रहणविग्रहोपयुज्यमानशिखरनखरलीलायुधः सललित विसंवादनिर्गमप्रतिबद्धरुद्धनीविकांशुकपरिपन्थिकोपलीलाकुञ्चितभ्रुकुटितर्जितो,रम-सकचग्रहव्याकुलविलोलधम्मिल्लबन्धसन्धुक्षितमन्मथातिस(म्भ्रा ?म्भ्रमा)न्तरितविरो-[2]धावरोधनपयोधरानिगाढो (!) गुरुनितम्बसम्मर्दवर्धिताक्रन्दचलतुलाकोटिकमुद्धत-स्तनतटानिबिडपीडाकम्प्रमध्ययष्टि[3] दष्टाधरसम्भ्रमभ्रान्तमुग्धलोचनमाश्चितकररुह-लिख्यमानकपोलविह्व(न?)लाननव्यञ्जितस्तानितकूजितमलके चुम्बनविमृदितागरुति-लमाङ्गपारिप्लवस्वेदबिन्दुरेखमुद्दामरागदीयमानयुवतिपौरुषमुपोढालक्तकपदपालीरक्त-भङ्गुरतरङ्गोत्तरच्छदमुच्चलितचिकुरपल्लवि...[4]परितगर्भगृहतलमळकवासचूर्णविसर-धूसरितोपधानमग्राम्यविकल्पविभ्रमरमणीयमायतायतं सुरतमाचचार।

गमितहेमन्तश्च हेमन्तातिग....[5][शत्ये शैत्यशान्तशकुन्तकान्ता]मुक्त-कोटरशते शीतालुजगत्प्रतीक्ष्यमध्यन्दिनातपे तापसतपःसम्भारभावनोचितेऽपि तुहिनद्रोहदुर्मुखपथिकजनप्राणा[पालनज्वलितपुण्यानलसकलसहे ( ? ) सुपग-भासुरहसन्तिकासहस्रे] सहस्ररश्मिश्रितशीतघृणिशिले श्लाघनीयपक्ष्मणि मृगरोमणि[6]

1. A reads प्रियतमेक्षणप्रभा. page 23.
2. A reads सम्भ्रान्तान्तरितविरोधन-पयोधराविगाढो. ,,
3. ,, पीडिता कम्प्रमध्य. ,,
4. L. about 7 letters.
5. ,, 10 ,,
6. A reads रोमणि मणिदास

दामावद्देलद्देतौ बहुलितबहळप्रवारस्पृहे प्रियप्रियङ्गुजन्म[ नि मन्मथनवकुलवृन्दा-नन्दिकुञ्जकुञ्जे पञ्जरजाड्कारपुटे ] घननयाच्चावाचाटहिमजलध (? )जठरपुष्करे[1] पुष्करादृजिरोभ्रसम्पदि (?) गतिधूतकन्दराशयालुशयुश्वासोष्ठनिश्चलसुखायमा[न-मृगशिशौ शश]विचयाक्षष्वकुण्डचके (?) शय्यातलमुक्त्यशक्तकामुकमिथुने नूतनगर्भभारमन्थरमाधवीलते[2] ललितमारुताकर्षणसुकरणपरिणमत्तरुपलाशे शीते(?)[3] इतरतटाककीलालमग्ननग्निकाकुलतुमुलधूमुकधूमधूमळोषसि दुस्सहप्रदोषदुर्भगोडुपे दुर्भेदस्फटिकदलबहुतुहिनघनघनसारहरितपुष्करहरिण[4]शफरुके शिशिरकाले मील-यति भुवनमम्भिकदूष (?) रोमकम्बलकृतावगुण्ठनः परिमृदुत्राणचर्मकञ्चुकित-चरणपद्मो हिमसत्रासिसारित( ? )प्रमदवनप्रासादवेदिकादत्तसङ्केतमङ्कजातल-ङ्घितभामिनीभयमन्तःपु(न? )रनाटकीयकन्यकाजनमभिनवरसास्वादलालसोऽभिसृत्य सुसङ्गीतपरिजनागतप्रतीहारभूमिकेषु घटितगवाक्षावरणसम्पुटेषु लीलापचकरेषु(!) मधुराश्वासनमितवल्लभाशङ्कमङ्काश्रवणाय च[5] क्षणविहस्तास्थानमायस्तहस्तपल्लव-व्यवहिताधरपुटविघटितस(र ? )रस[6]चुम्बनारम्भरागविवलिततनुलतोल्लसत्काठिनकुच-मुकुलमुद्भिन्नपुळकजालजर्जरकठोरपाण्डुरेखमसकलगळदंशुकश्रोणिबिम्बझणझणाय-मानप्रवाळकाञ्चीगुणम् अविरलघर्मवारिवर्षदूषितविशेषकन्यासमदर्शितपथप्रलब्ध-सदयदन्त[7]. . .वसनास्वादमा[8]कम्पमानप्रथमयन्त्रणोन्माथमन्थरोहद्दण्डमकाण्डवलन-भङ्गुरितरतिलयमङ्गस्तम्भितान्तरक्षीणविरामदचाश्वासमश्रुगर्भतरळतारकेक्षणभ्रमण-कारितकरुणमा(तु)रकृपणकोमलाञ्जलिघटनया[9]चितावसानमनलसोपलभ्यमानसद्भव[10]-रसं चोरिकासुरतर[11] (स)तृप्तिमन्वगच्छत् ।

1. A reads हिमजडजठरे पुष्करे. p. 23.
2. ,, लतेव. ,, 24.
3. We may read either शीतलतर or शीतेतर.
4. A reads सारहरिण. page 24.
5. ,, श्रवणाय च न क्षण. ,,
6. A reads विघटितसमरस. page 24.
7. L. about 1 letter.
8. A. reads कम्पमानमप्रथम. page 24.
9. ,, याचितमसनमनल. ,,
10. ,, सद्भवनसञ्चारिकासुरतसतृप्तिं. ,,
11. Our Ms. reads रसमतृप्तिरन्वगच्छत्

शीलज्ञवल्लभापसर्पविदितविभ्रमश्च समरदुर्लभं भयमुवाह । प्रकुपित-प्रधानावरोधसङ्गृहीतश्च तज्जघननिरवकाशरशनागुणनिगळितचरणः प्रणयकोप-कुञ्चिताभिर्भ्रूलताभिराहत इव तासामासादितहृदयवेपथुररुणाशोकपल्लवैरिव[1] चरणकिसलयैरुरसि ताड्यमानो मदनशरक्षरितैः क्षतजैरिव सामर्षस्वेदसलिल-क्षालितैः पादालक्तक(दग्रे ? द्र)वैराम्रेडितकुङ्कुमाङ्गरागो बहुरसमहरवाहयत् । अनु-कूलतुहिनमारु(त)स्पर्शवेजितानाम[ व ]यवानामन्यभेषजत्वा ( ? ) पुनरनुनीय स्वय-मसितलोचनाभिर्वासभवनमनीयत । शिशिरमरुत्परामर्शपरुषिताधरव्रणरुजाभिश्चा-कृतापराधोऽपि भ्रुकुटिबन्धकुटिलतकटाक्षमायताक्षीभिरैक्ष्यत ।

एवं च निरन्तरायरमणीयान् निजभुजबलसंभृ...[2] नियार्थान् यथाकाम-मश्नुवानः कदाचिदग्रमहिषीं वसुमतीमासन्नसत्त्वपरिजनादन्तर्वत्नीमशृणोत्[3] । आरूढहर्षश्च वि(की ? ती)र्णपूर्णपात्रः स्वप्नदोहलादिकम ...[4] शेषां यशोवतीं नाम पप्रच्छ । सा तु विज्ञापयामास— 'देव ! देव्याः खलु वृत्ते चैत्रमासे सुस्नातायाः शुचिदुकूलवासिन्याः स्वप्ने सुरभिपरिमळाकृष्ट ...[5] राप्य शात-कुम्भकुम्भसम्भृतैरम्भोभिः कृतोऽभिषेकः । स्पृहयन्ती चेयमानीलगुरुपयोधर-मुखमन्थरदर्शन....[6]ष्विव स्नेहवतीषु निस्त्रिंशधारासु पतति बद्धरागा दृष्टिः इति । आकर्ण्य दिव्यानुभावं गर्भमाकलयन्नमृतवर्षेणेव सर्वाङ्गसमा....[7]शनीकाशासु स्पर्शानुमेयास्वाकाशस्फटिकहर्म्या(दि)भूमिष्वाकाशविहारदोहलमस्या निरवर्तयत् । उत्सवोत्तरेण च यथाविधि प्रयुक्ते....[8]वर्धमाने गर्भे क्रमेणाभ्यर्णप्रसवसमयायां च देव्यामहरहरभिवर्धमानानन्दमवनिपालमेकदा भुक्तास्थानमण्डपगतमासक्तिपय-मित्रामात्य....[9]भ्येत्य महाप्रतीहारः प्रणामपूर्वं व्यज्ञापयत् ।

1. A extends only upto this.
2. L. about 2 letters.
3. Could this be आसन्नसत्परिजनात् ?
4. L. about 11 letters.
6. L. about 22 letters.
7. „ „
8. „ 20 „
9. „ 5 „

देव ! देवदर्शनमभिलषामीति ब्रुवाणः कोऽपि मस्करी परिव्राड् द्वारभूमौ वर्तत इति । अनुज्ञातेन च प्रवेश्यमान(म ? मा)धिभिर्नियमैश्च क्षाममध्व-धूळिभिर्दुःखैश्च मलिनीकृतविग्रहमागृहीतपादुकादितनुपुस्तकाक्षमालिकाकमण्डलु-त्रिदण्डादिकोपकरणमुच्चघोणमलघकर्णमानिम्नदृशं कृशकपोलमवनिपालः परिव्राज-मपश्यत् । कृतयथोपचारश्च वेत्रासनोपविष्टमुत्सारितपरिजनस्तमुपह्वरे सहा-मास्थः पप्रच्छ — 'कथमसि (त्वे ? त्व)मेवागत' इति । सोऽब्रवीत् — 'विदितमेव देवस्य यथाहमेवंलिङ्गो मालवेषु नगर्यामनेकशिष्यगणपरि(छु ? वृ)तस्त्वदा-देशेन प्रतिवसामि । तत्र च मालवेश्वरो मानसारो नाम नरपतिरुत्खातप्रति-रोपितस्त्वया त्वच्चरणकमलरेणुनिकरानिचितमतिभरमिव दुःखदुःखेन शिरोऽवहत् । अमर्षज्वरजरितराज्यसुखारोचकः परित्यज्य सुरयुवतितुलितलावण्यमधिगतललित-कथाप्रपञ्चमञ्चितमृदुकथितहसितमभिजनविनयवन्तमन्तःपुरसुन्दरीजनमतनीयास तपस्यवर्तत । तपसा च पुनरन्यजन्मफलदानोचितेन, दुःसाधमाकलय्य फलमैहिकं, महाकाळे महामांसविक्रयमकरोत् । आमर्दकेन भगवता शौर्यातिशयसन्तोषितेन भवद्विजयाय कोऽपि निस्त्रिंशो दत्तः । स चोद्गिरति विषधर इव हुतवहार्चिषः-पक्षिराज इव पतति पतङ्गवर्त्मना, सुभट इव च स्वाम्यादेशेन दृष्टिपथे तिष्ठतामनपहृत्य जीवितं न निवर्तते । तं च भुजसहायमासाद्य मन्दीकृत-भवत्प्रभावशङ्कः शङ्करगतमपि पारमैश्वर्यमाक्रमोपलभ्यमानमेव मन्य(मान)स्तवो-पर्यभियोगाय (फ ? ब)लसमुत्थानं करोति । परं तु देवः प्रमाण'मिति ।

राजा तु जातवैमनस्योऽपि स्वभावधीरतया निगृह्य विक्रियां तु — ननु श्रुतमविसंवादितात्मनोऽस्य वचनम् । अनुरूपं हि मानमयस्य महीभुजां हृदयस्यारिपरिभवासहिष्णुत्वम् । उत्तमानां चात्मनिरपेक्षाणि साहसानि समर्थान्येव दैवतान्यपि विस्मापयितुम् । अवन्ध्यसन्तोषाश्च देवता दुर्लभानपि कामानुपहरेयुः । अतोऽमुष्मिन्नौपयिकममर्त्योपस्थितेऽतिपातिन्यर्थजाते विचिन्त्यताम् । आगमानु-सारप्रवृत्ता च बुद्धिरनुगच्छति सर्वत्रैवावकाशम् । आकाशेऽपि विचरन्ति, अम्बु-

नाथमप्यतितरन्ति, पाताळमपि प्रविशन्ति, असुरविवराण्यप्यावसन्ति, मेरुशिखर-मप्यारोहन्ति, विषधरैरपि क्रीडन्ति, कुपुरुषैरपि व्यवह(र)न्ति, कुञ्जरानपि वशीकुर्वन्ति, मृगपतीनपि बध्नन्ति, विलासिनीहृदयान्यप्यावर्जयन्ति ...[1] प्याराधयन्ति नियतमुपायपृष्ठोद्यमा मनुष्याः । निरुपायस्य करगतमप्यन्न(क ? क्ष्य)-मेवोपयोक्तुमित्यविह्वलमचलबन्धमचलं गुहासिंहवृहि....[2]

तेषां तु ...[3] पथचिरविचारितमतिः सुमतिरभाषत— 'देव दैव(म)चिन्त्य-[4]मिति यदभिहितमर्थशास्त्रकारैस्तदेवेदमापतितं....[5]मसाध्यं च सर्वपुरुषकाराणामा-मर्दकप्रसादः । तदेवंगते परबलसम्भूतानुभावस्य रिपोरात्मार्पणेन प्रसादनम्....[6] संशयकरम्, इतरद् भोगात्यन्तविरोधि । तथापीदमेव शास्त्रे....[7]यथात्रोन निदर्श-नेन निदर्शितम्, एकान्तपराजये सत्युभयतः प्रजाक्षयादधर्म्ये ...[8] स्तदादाय ...[9] सारभूतं कोशवाहनमनभिज्ञेयं क्वचिद् दुर्गवनमाश्रिताः कालमेव प्रत....[10]देवीं वा विन्ध्यगिरि(का ? कन्द)रालयां शबराकुलित( ? )[11]रचितनरपशुपिशितोपहारतुष्टामिष्ट-वरप्रदानपण्डितां चण्डिकामाराधयिष्याम ' इति । अपरे च मन्त्रिणो जीविते-(व ? च) सति भद्रमित्यस्यैव मतमुच्चावचाभिरुपपत्तिभिरुपचिन्वत ।

श्रुत्वा तु सत्त्वगुणमिव लब्धवृत्तिमच्छस्मितचन्द्रिकाच्छलेन दर्शयन् विशांपतिः रामानुशयानुरूपां गिरमिमामुपादत्त वक्तुम्—' अस्तीदमात्मशरीररक्षा-कृते जनपदपुरमालिनी रत्नाकरवलयमेखला क्षितिरपि अनन्यमेव त अयं त्वस्य-र्णायस्य( ? ) गौरवातिशय त्रिवर्गसाधनोपकरणतयाभ्यनुज्ञातः कृतास्माभिः, अन्यथा

---

1. L. about 6 letters.
2. „ 16 „
3. „ 4 „
4. See 'अचिन्त्यं दैवम्' Kautaliyarthasastra VI-ii.
5. L. about 20 letters.
6. L. about 20 letters.
7. A space for 3 letters is left blank here.
8-9. The two lacunae cover about 17 letters
10. L. about 8 letters,
11. We may read शबरकुलरचित.

पुनरधन्यस्यास्य कर्मभूमिसमुद्भवस्यानेकशाखाभेदसञ्चितात्मनः, पयोधरप्रसेकवर्धितस्य, स्नायुसिरालतावितानगहनस्यास्थिस्थाणुशतनिचितस्य, चपलेन्द्रियमृगगणविचरितस्य कुसुमशराशीविषाधिवासभीषणहृदयकोटरस्य, पवनबलप्रचलितस्य, विजृम्भमाणतृष्णापिशाचिकाधिष्ठितस्य, रुधिरपटलपल्लवस्य, पलितकुसुमजन्मनः परिणामनिदाघशोषणीयस्यान्तकवनगजभञ्जनीयस्य, कायसंज्ञस्य शून्यारण्यस्य कीदृशं सारं, क्व चोपयोगः। दृश्यतां च तावच्छरीरयन्त्रम्, त्रिशत्यास्थिकीलानां, सप्तत्या वा सप्तशत्या सिरारज्जूनां, पञ्चाशता पिशितपेशीप्रलेपानां, चतुर्विंशत्या रसवाहानां धमनीस्रोतसां, सप्तभिर्धातुभिस्त्रिभिर्दोषैः, पञ्चभिर्महद्भिरेकादशभिरिन्द्रियैः, सप्तभिश्च त्वग्भिरन्येन चैवमात्मकेन दुष्प्रपञ्चेनाविचारप्रसिद्धरामणीयकमुपरचित(मि ? म)तिविचक्षणेन कर्मशिल्पिना मर्मणां किल शतेन सप्तोत्तरेण। यत्रकचिदवघट्टितमप्रतिघटनक्षमं तत्क्षण एव व्यापद्यते। शक्यं चैत(द्) धर्मयन्त्रमस्थिपञ्जरं सिरागहनं रुधिरहृदं पिशितराशिमेदःकुम्भमलजम्बालं रोगनीडमित्यन्यतमेन नाम्ना व्यपदेष्टुम्। अत्र दुष्कदिरेन्दुः खलासं(?)वसति ज्ञानदरिद्रः पुरुषः। अत्र मवल्मीके(?) भोगविकारानुपहरति नैकमुखस्तृष्णामहाहिः। अत्र विषवृक्षे जन्मफलानि भक्षयन्ति लोलुपाः पञ्चेन्द्रियशकुनयः। अत्र कासारे प्रज्ञासलिलमावृणोत्यभेद्य(मित्य ? म)विद्याभ्रपटलम्। अत्र श्मशाने ददाति सान्निध्यमुद्भूतभूतिपरुषितो रिपुषड्वर्गपितृगणः। कष्टं बत पापपार्थिवस्यास्यानवस्थितं बलमनाभिमुखा दुःखोपद्रुताश्च विषयाः, नियतमायासभूयसी यात्रा, नैकविधव्याधयः प्रतिहन्तारः, मुखमेकम्, अनेकमुखानि छिद्राणि, अनवस्थिता वर्णस्थितिः कोशैकाधिष्ठानं दर्शनम् आशयो दोषग्राही, रक्तस्य तिरस्कारोऽन्तर्गताः प्रभञ्जनाः, शिरस...[1]रुणत्रोपरमत्यक्षक्रीडात्वमार्गदण्डधृतिरपरिणीतस्य अत एव ह्यैकान्तिकनश्वरत्वं शाश्वती प्रदीपशिखा, निश्चलो नवजलौघः स्थिरतराणि सलिलबु....[2]पि नायं स्वस्थास्नुः(?)। अस्यैव च दुरात्मनः कृतघ्नस्य कृते(?)रपरभवना

1. L. about 4 letters.
2. L. about 18 letters.

द्वारस्थगळग्रहाननुभवन्ति, असीक्षेपनिरस्तितिक्षु(?)....[1]मुपरचयन्ति, गात्राणि सङ्कोचयन्ति, मस्तकेन महीं मसृणयन्ति, दास्यमभ्युपगच्छन्ति, उच्छेषणमुपभुञ्जते, मि....[2] धूनपवदन्ति, माहात्म्यमपह्नुवते, मित्राण्यभिद्रुह्यन्ति, गुरूनपक्षिपन्ति, प्राणान् विक्रीणते, स्तेयमाचरन्ति, मायाः प्रवर्तयन्ते, वृद्धिमुपजीवन्ति, कुप्य....[3] मांसपिण्डमहानितपीति...[4]त(?)क्षपयितुमभिनिविष्टा दुर्मतयः। तदेवमेतदनेकाति-प्रयासपरम्परावर्ध्यमानमप्यकस्मादेव क्षुद्रसङ्गतमिव विभज्यते, नोप....[5]न्ति, नोप-लालितं गणयति, नानुवृत्तिमवबुध्यते, न पक्षपातं पश्यति, न बहुमानं मन्यते, सुलभविनाशकारणत्वाच्च निषेक एव व्यापद्यते, गर्भ एव वा स्रवति, शवीभूतमेव वा जायते, जातमात्रमेव वा नश्यति, शैशव एवोपरमति, यदि कदाचित् कर्मबलेन कालसामर्थ्यादीश्वरेच्छया यदृच्छया वा तावन्तमतिपतति क्षेमेण नतिवंध्य(?)मध्वानमनभिरामया गभीरकासच्छलेन तर्जयन्त्या कालरात्र्या वाजस्रस्रुतलालास्यन्दिविस्रसया सुनियोगतः सकचग्रहं हठादाकृष्यते ।

कष्टं जराभिभूतस्य जन्तोरन्तकसन्निकर्षोपसर्पणभयादिवोत्कम्पन्ते गात्राणि । महाप्रयाणप्रयासचिन्ता(दिव?)वैक्लव्यादिव जायते गतिसादः । दोषण(?)-दर्शनकर्माधिकारिणी जीवित एव कालदू(त?ता)गमननिवेदनार्थमन्तर्विशति दृष्टिः । अक्षिगूहनहेतुजिज्ञासार्थमिवानुपतति स्थानभ्रंशदुःस्थिता भ्रूः । भूयोऽवयव-शैथिल्यादचिरधवळरोमजालशबलायाः शयनैकरसायाः कम्बळ इव (ल)म्बते चर्मसञ्चयः । पञ्जर इव राशकुन्त्यास्तातश्वासकासिन्या (?) स्फुटीभवत्यस्थिराशिः । विशदायन्ते नवयौवनक्षरणकुल्यावल्यः । परिणामदहनदग्धस्य यौवनस्य

---

1. L. about 20 letters.
2. „ 25 „
3. „ 3 „
4. L. about 10 letters
5. „ 3 „

भस्मेव पलितरशिरत्यासङ्गादुत्तमाङ्गेनोह्यते। प्रतिमुखापतितपण्डवार्धक्यघट्टनादिव प्रविशीर्यन्ते दन्ताः। प्रेतविषयप्रयाणारम्भप्रहतगम्भीरकासदुन्दु(भि)भिर्जीवितस्य मार्गालोचनदूता इवाग्रतः प्रसर्पन्त्युत्कथितरतिरवानुकर्षणा इव पूतिगन्धयः श्वासाः। नोपयाति विकृतरूपमप्रत्यभिज्ञान(व)तीव स्मृतिः। अस्त्येवमिति व्यपदेशादपत्रपमाणेवापसर्पत्यपत्रपा। पापीयसी चेयं जरा नामावमानस्य माता, धिक्कृतानां धात्री, कार्पण्यस्य भगिनी, भयस्यायतिः, अभावस्य प्रागवस्था, धैर्यस्य विरतिः, अहङ्कारस्यावसानमनित्य(स?)तायाः सखी, सम्मोहस्य सन्ततिः, अशौचस्यावतारवीथी, नरकवेदनानां पूर्वरूपं, शृङ्गार-विलसितानामपथ्यभूमिः, दीपिकमदनं रक्षिकदर्थिन(?)मनुद्धृतनयनमन्धी-करणमशल्यवाक्यं कर्णशक्त्यवसादनमभीमयुद्धं गदाभिघातसङ्कुलमनबलामुखं तिलकाळकप्रसाधनममोघमेतदन्तकायुधम्।

एवं च जातिजरामृतिभिस्तिसृभिस्त्रिखण्डकल्पाभिरतिभयानकमाजवं जव(?)जलधिमवगाहमानस्य नौरिवे(यत्?यं) प्रतिक्षणाशङ्कनीयभङ्गा तनुः। तथा चास्य देहस्य त्रिदोषस्यापि दोषानुदाहरन्तो नाद्यापि पारं पश्यन्ति महर्षयः। रसमयमप्येकान्तविरसमेवं विजानतामनेकजन्तुसहस्रसम्बाधसङ्कुलमपि शून्यमेवै-तदालोच्यते। तच्चेदमनेकसारयोगमप्यसारमनेकान्तजालवेष्टितमप्यबन्धमसह्य-सन्तापकारणमप्यशुचि रूपं अभयङ्करप..[1]क्ततरं सरोमारुयव्यवार्या(?)स्वादरसमन्त-र्गुरुशुक्रमप्यनाथमप्यन्तर्गलमसम्भ(?)मप्यनवस्थानमन्तश्चरपवनपञ्चकमपि सतत ....[2]लमन्तर्गतमर...[3]मतिस्फुटसन्धिशब्दमपि (वि)ग्रहव्यपदेश्यमशिवमशान्तमनर्थ-मूलम्। अथच किलैतद्दुरत्ययजम्। अत्र किलायं कृताभिष्वङ्गः पु...[4]योदुरपकारये-ऽमुना(?) किमपि साध्यमध्यवस्यन्ति। अस्य तु मे बभूव युक्तोऽयं भूतसमवाय-

1. L. about 5 letters.
2. „ 5 „
3. L. about 10 letters.
4. „ 34 „

स्तथापि क्षत्रकुलकुं..त्मव[1] देव्या वसुमत्या राजलक्ष्मीर्युष्मति दीपिकाप्रकाशिकेन(?)च यथासुखमसम्बाधरमणीयेन वर्त्मना मुक्तनन्द्रतन्द्रिताः प्रमोदनभाजा..[2]मिष्टानि वसूनि स्वरतोऽर्थिवर्गः सुहृद्गणाश्च संव(र्जि ? र्धि)ताः स्वनिर्विशेषं भोगप्रपञ्चैः । पश्यामि नातः परं करणी(ये)ष्वन्यतरम् । उत सन्ततिप्रतिष्ठा....[3] स्वप्नदोहलप्रत्ययेन स्निग्धादेशव्याहृतेन स्वचित्तवृत्तिप्रामाण्येन च महानुभावः कोऽपि देव्या गर्भवर्ती कुलस्य निस्तारकस्तन्तुरिति शक्यमध्य(वानु ? वसातु)म् । अयमसावहम्, अस्ति हि वचनम् 'आत्मा वै पुत्रः' इति । असावेव यथाचिन्तितेन श्रेयसा योजनीयः । ततो मम च मत्पितॄणां च प्रजानां च बहूपकृतं भवति । स खल्वहमनालोचन (र)मणीयमकाण्डभङ्गुरं शरीरमाहवशिरसि क्षत्रकुलोचितेन वर्त्मना व्ययीकृ(त ? त्य) शरदिन्दुमनोहरमासंसारस्थायि पुण्यतमं य(शः)शरीरममरलोकविहारि चानेकाध्वरपरम्पराप्रार्थ्यमानम(य?)श्रमेण (शरीरम्?) आसादयितुमिच्छामि । नेच्छामि दुःखायावर्णाय चैतत्कळेबरं धारयितुम्' इति ।

अभिहितवत्यवसिते मनुजभर्तरि, जानन्नपि तद्व्यवसायमप्रावर्त्यं(?) भर्तृस्नेहपरवता धैर्यस्तम्भिताभि(ष)ङ्गेण चेतसा सुमित्रः प्रत्यवादीत्—'देव! ज्ञात एव कातरस्य जीवितव्यमिवेतरस्य प्रियमरणे .मर्तव्यमि(ता ? ति) । आर्तत्राणदीक्षया चाद्यापि न्यायनिर्व्यूढया यथार्थमूढः क्षत्रशब्द इत्येतदप्यनपलापमेव । न चेदमनारतं (धि ? नि)जगुरुसुहृद्बन्धुकृत्योपयोगात् कृतप्रयोजनेन स्वतः पुनरधन्येनानिन्द्येनाशुना(?) दुःखरूपेण चेतसा सम्प्रति रणयज्ञाङ्गतां गतेनात्मना सङ्घाते(?) । न खल्वमहावराहो महीं समुद्धरति, नाशम्भुरभ्रगङ्गां धारयति, नाहिरण्यगर्भो भुवनत्रयीमुद्भावयति, नादुग्धोदधिस्सुधामाविष्करोति ।

1. L. about 25 letters.
2. „ 15 „
3. „ 3 „

न चाभवान् भवत्सन्ततिमुत्थापयितुं समर्थः। न(न्व? ह्य)नन्तादन्येनानू-(ढभरो? द्धो)भरः कैटभारेः। विदितमेव खलु विदितवेदितव्यस्य यथेमाः प्रतिपदसुलभान्तराया दुर्योधनसाधनसमवायाश्च सम्पदः। प्रार्थ्यमानदुरवापा समाराध्यमानदुःखशीला रक्ष्यमाणप्रपलायिनी च लक्ष्मीः।

लक्ष्मीविडम्बनम्—प्रत्यक्षमेव चास्याश्चापलम्। एषा खलु देवस्य पितृ-पितामहसंवर्धितापि रिपुषड्वर्गसम्बाधमुक्तचित्तेन सुचिरलालितापि प्रवीरकरदण्ड-मण्डलीकृतप्रचण्डचापचक्रटङ्कारमुखरितेषु शरीरं जीवितमप्यनवेक्ष्य रक्षितापि यथेष्टलाभसंवर्धिता तुष्टद्विजवराशीर्वादाभिनन्दितापि नित्याराधनप्रसन्नकुलदेवता-धिष्ठापि(तापि) नित्योद्युक्तविद्याधरवृद्धसमाजाजस्रग्राह्यमाणविनयापि चतु-रुदधिवलयमध्यवर्तिसकलनरपतिकुलविरचिताञ्जलिकमलवनविहारमानितमनोरथापि स्वभावदोषेण दुर्मतिरपरिचिता जीवत्येव तस्मिन्नरिजीवि(ते?त)लेहलोलखड्गजिह्वे महाहिभोगभीषणे भ....[1]मेतस्यामिन्दुकरदलितकुमुदकुड्मलोदरदलावदातामपहरित-बृहस्पतौ(?) तिष्ठत्येव तस्मिन् भयपलायनोद्विग्नसकलक्षत्रकीर्तिमानिनी...[2]रिचेयं पतङ्गरथमयीव भुजङ्गभोगिनी मुहूर्तमप्यविश्रम्य परिभ्रमति। उपनतापि दैवादुरसि च मद ...[3] विदितकृत्याकृत्यमाकुलीकृताक्षमनक्षरमनुभवदुःखमङ्गनिर्भोगैराचक्षाण-मारूढशङ्कासाध्वसैरवस्थानुरूप ....[4] रुषमप्रत्यपेक्षाप्रधानपति(?) मधुकृद्भिरिव मलिनवर्णैः क्षुद्रात्मकैः शिक्षिता कर्कशपुरुषसाहसैकहार्यमनास्या(?) दुर्मेध्ये ....[5] द्वाराहति दुष्ट मर्कटीयं तमकस्मादेव क्षो(प?भ)यित्वा विच्युतफलमुद्धूतपत्रमुत्सृज्य विटपम(ह्यं? न्यं) सङ्क्रामति।

---

1. L. about 8 letters.
2. „ 24 „
3. „ 25 „
4. L. about 25 letters.
5. „ 6 „

यत्र च लग्ना ज्वलनशिखेव तमवश्यं....[1]त्यैव प्रशाम्यति । मन्ये च कालकूटस्यास्याश्च भगवत्या निष्पतता (?) निर्विषीभूतः स्वस्तिमानिदानीं दुग्धसिन्धुः । अथवा नेयं कालकूटतुल्यकक्ष्या लक्षयितव्या, यदमुनैकस्येश्वरस्य कण्ठमात्रं दूषितम्, अनया शतसहस्राणीश्वराणां सर्वाकारं दूषितानि । सैषा मन्दरोद्धूतमहासमुद्रवीचिवलयवेगास्फालनविजृम्भिताङ्गभङ्गज्व(रे ? रा) महान्तमूष्माणमुद्गमति, स्थानासनशयनेषु धृतिमुपगच्छति, मुहुर्मुहुर्वेष्टते. भक्तं द्वेष्टि, दृष्टिमुद्भ्रमयति, जीवितं च पर्यस्यमाना भयानकां दशामावाहयति, अचलक्षोभतुमुलजलधिगर्भमूर्च्छन्मारुतातिरेकस्वीकृतेव (क ? )जातवातप्रकृतिरसङ्गतशीला चानवस्थिता च क्षुद्रा च निष्ठुरप्रलापकारिणी च कृशवर्णा च कृतप्रलोभना च स्वप्नरूपैर्विभ्रमैर्भृशं दुनोति । (कारता ? )मुरगनायकस्य वासुकेर्मन्दराकर्षणखेदविह्वलस्य निःश्वासनिज्वरविषाग्निधूममण्डलाभिकृतेव(?) सदसच्च न पश्यति, परप्रणेयासतमजस्रमालम्बते, महापथेऽपि स्खलति, नरपशूनपि समापतति, अस्पृश्यानपि स्पृशति, अशुचिमप्यधितिष्ठति, चक्षुष्मद्भिश्च परिभूयते । सत्यमचलवृत्तेरप्युदग्रस्यापि भूभृतोऽस्याः समुद्भवे द्विजिह्वसंवेष्टनमतिघोरा च भ्रान्तिरासीत् । सर्वानेव देवान् ब्रह्ममुखान् परिभूय समस्तमायासिद्धान्ततन्त्रतीर्थकरं नारायणमात्मनोपसृत्य भजमानयानयोद्घोषितमसाधारणं धार्ष्ट्यम् । अमुनातिमाये(न?ने)मां रक्षताधोक्षजेनारभूतावमानतादिं नानाविधा (?) विडम्बनार्थपरा चेयं दुग्धराशेरपसृता चटुलकटाक्षदृष्टिक्षेपोन्मादितपुरुषा स्वनिमित्तसङ्कल्पितानि विग्रहसंग्रहाणि पश्यन्ती वश्येव राजकुलेषु लीलावष्टम्भरसप्रगल्भं भ्रमति । सोष्म(त)येव जातिं म्लापयति । तेजोरूपतयेव वंशसन्ततिं दहति । तमोमयत्वादिव सद्भवनानि मलिनयति । व्यभिचारितयेव महाकुलानि पांसुलयति । चित्रमिदम् अयशोदापि वर्धयति (म?)बलम्, असुभद्रापि विजयमानुगुण्येनाकर्षति, अदमयन्त्यपि लोकपालानवधूय नलसारङ्गगुरुकरोति (?) । अमरैकसत्वाद(?)पारिजातं रत्नाकरमपि

1. L. about 4 letters.

नाधिवसति, विरतविग्रहं मकरध्वजमपि पुरुषबुद्ध्या नाभिनन्दति। कुलासंग्रहशीलकुलिश(?) इत्यसुखायमानेव शङ्के शशाङ्केऽपि न वसति। सुरभिगन्धसम्पन्नमन्यमसहमाने(नै?)व मन्ये महोत्पलेऽपि न पातयति पदम्। अङ्गीकृतमसुरस्नेहोपचारमित्यसूययन्त्येव नूनमसिधारातलेऽपि न चङ्क्रमते। तर्कयामि चास्याः सन्निधानादेवावदातेऽपि चन्द्रमण्डले स्फुटीभूतः कळङ्कः, पावनेष्वपि कमलवनेषु प्रदीर्यते रजोविकारः। स्वच्छेऽपि च कृपाणधाराजले ज....[1]ष भेदनशक्तिः। त्यागशक्तिमुत्कर्षिणीमिव दर्शयन्ती त्यागशीलानेव त्यजति। शूरैः सह शौर्यमिव प्रकाशयन्ती विगृह्येव तिष्ठति। विनीतेऽपि विनीततरेव तिरस्करोत्यनुराग....[2]व न सुखमास्ते। ह्रीमत्सु नितान्तह्रीतेव न रूपमात्मनोऽभिव्यनक्ति। धर्मरतिचण्डरागारतियन्त्रणासहिष्णुतयेव(?) नावेशयति विद्वत्सु जळप....[3]म्युपैति प्रणयम्। अदीनेषु दीनसत्वा शीलभेदादिव नावलम्बते मैत्रीं म(?) (उ)च्छ्रितेषु क्षुद्रारोहितयेव ना(द्धि ? धि)रोढुं क्षमते। शाकट....[4]प्रतापम्लानं प्रश्रयमनुवेलमवकिरन्ती प्रवर्तते। अम्बुगर्भा रागमिव विदाहदूषितलमाभिजात्यं प्रतिक्षणमवमृक्नाति (?) चरणमिवानुरक्तमत्यधस्ताद्वर्तयति....[5]तनुतरं दधाति। ऊरुदण्डमिव स्थितमुपहितोरुजालं क्लेशयति। जघनमिव महाभोगमावृणोति। उरमिव मध्यस्थं भग्नकलुत्वमुद्धति(?)। नाभिरन्ध्रमिव गम्भीरं बह्वावर्तमुपस्थापयति। स्तनतटमिव प्रवृद्धं बन्धयति। भुजपाशमिव मृदुमवाङ्मुखयति। अधरमिव परिस्पन्दवन्तं क्षतवस्थन(?)मापादयति। दशननिवेशमिवामलमधरातिरस्कार्यमारचयति। लोचनयुगळमिव स्निग्धं विभ्रमेण योजयति। केशहस्तमिवायतिमन्तं संयमयति। खरतरेषु चासौ खलेषु पातिता धान्यपूलीव (?) दुर्जनवरणमात्रसंहृता निःशङ्कतां गता विफलीक्रियते।

1. L. about 3 letters.
2. „ 15 „
3. „ 24 „
4. L. about 22 letters.
5. „ 12 „

निर्भयादविभ्रमा च मत्तमातङ्गानपि भ्रमरीवाभिसरति । विद्युल्लेखास्तरळा मेघराजिरिव रा(ज)हंसानप्युद्वेजयति । जळानप्यन्धानपि मूकानपि क्षयिणोऽपि श्वित्रिणोऽपि व्यङ्गानपि विरूपानपि वृद्धानपि क्लीबानपि कृपणानपि लुब्धानपि मुग्धानपि निष्ठुरानपि स्वैरि(णीन ? णोऽ)पि हरति । असदृशानेकदुर्जनोपभोगनिर्दयकदर्थितापि नापत्रपते ।

किं बहुना । न गुणमपेक्ष्याभिवर्धते, ना(भिभोषे ? पि दोषे)ण व्यावर्तते । तथाहि—अजातशत्रोर्धार्मिकतामनिलसम्भवस्याध्यवसायसामर्थ्यमर्जुनस्य पराक्रमं, यमयोस्त्वतिमानुषरूपमनुरुध्यमाना शकुनिरचितमक्ष(प्यू ? द्यू)तकपटं चारीकृत्य क्षुद्रम(ले ? ली)काभिमानगर्वं दुर्योधनमतिनिर्भरमालिलिङ्ग लक्ष्मीः । किमनया नाचरितमिन्द्रजालेषु, किमनभ्यस्तं प्रलम्भनेषु, किमु शेषितं महापातकेषु, किमगणितमकार्येषु, किमप्रवर्तितं वर्णसङ्करेषु, किमभिन्नं मर्यादासु, किमनुद्भावितं मोहविलसितेषु, किमप्रतिहतं जालवर्त्मसु । रज्जुरियमुद्बन्धनाय सत्यवादितायाः, विषमियं जीवितहरणाय माहात्म्यस्य, शस्त्रमियं विशसनाय सत्पुरुषवृत्तानाम्, अग्निरियं निर्दहनाय धर्मस्य, सलिलमियं निमज्जनाय सौजन्यस्य, धूळिरियं धूसरीकरणाय चारित्रस्य । चित्रीयते चेदं सीमन्तिनीविसंवादि वृत्तमस्याः । य(ता ? तो)यमेव पुरुषमेषा समाश्लिष्यति स्वयमेव तमुद्दामकामं परस्त्रीसहस्रेषु योजयति । स(जापि ? दापि) वारुणीं हतेयमात्मनः स(म)क्षमासेवमानमुत्साहयति । गुणानपि दोषीकरोति, दोषानपि गुणीकरोति । अस्याश्च चापलातिशये प्रक्रान्ते प्रस्तावोऽपि (नाचिराचीषा ? चिषाम्) । न वार्तापि करिकळभकर्णपल्लवानाम् । न कथापि कदलिकाप्रान्तचारिकाणाम् । केवलमनार्यबुद्धेरेवैनामनवस्थितत्वेनानुसर्तुमस्ति श(स्ति ! क्तिः) । एवंविधापि चेयं दुराचारासकृद्व्यभिचारितापि स्वभावचापलेन भूयोऽप्यसाधारणपुरुषकारभूषणैर्भवादृशैरेव श(क्ष्य?क्य)ते प्रत्याहर्तुम् । धार्तराष्ट्रानुच्छ्रिष्मित(?)कपटद्यूतहारितापि खरवरण्यवासविनिवृत्तैः पाण्डुपुत्रैः प्रत्युद्धृतैवेयमपरिमितमहामहीभृत्प्रभूतवाहिनीवरपरिबृंहितमनेकशतसहस्रनागसंकुलं

कुरुकुलबलजलधिमनुप्रविश्य शुक्ति(?क्ते)रिव वृत्तमुक्तालक्ष्मीः। दुर्लभश्च स ....[1] यस्येयं निश्चला। चलितामेव खल्विमां दुष्टचेटीमिव पुनः पुनरवगृह्य निगळयित्वानीतवतं कालम्(?) अचलशिखाकूटविकटमांसळांसपीठाः पीठीकृतसप्तद्वीपसकलाराज....[2]चरणा धरणिभुजः। श्रूयते च नवनळिननालतन्तुगर्भलीनो नहुषप्रभावसमयं सम्भ्रममेव चक्षमे सहस्राक्षः। पुनरमुष्मिन् पुलोमकन्यकारुचिर ....[3] धिरूढे निग्रहामर्षितस्य महर्षेरगस्त्यस्य शापादजगरभूयं गतवत्यनघवृत्तं कळत्रमनायकां च नाकलक्ष्मीं प्रापद्यत। ननु च ...[4] ह्यताम्बुजश्रियं प्रत्याकर्षन् प्रत्यक्ष एव देवो दिवाकरः। लक्ष्मीविडम्बनं समाप्तम्॥

प्रसीद देव! निवर्तस्व साहसादपहर्तस्तय परिकर ....[5] रचलदुर्गमलङ्घ्यमाश्रितः प्रतीक्षस्व कालम्। उत्पन्नवरबलोपयोगसन्तुष्टो राष्ट्रोपलब्धिसिद्धयात्राफलः फलवद्भूमिरामणीयकाकृष्टचित्तवृत्तिरत्रैव वर्तेत वासमेव जनपदम्(?)। अवसितप्रयोजनस्यापि च विषमशैलदुर्गजुषस्त्यक्तात्मनश्च नास्माननु प्रहृत्य शत्रोः फलम्। प्रभविष्णु हि प्रहरणममरप्रसादोपलब्धं तदपि दृष्टिगोचरस्थितेषु श्रूयते।

श्रुतोपपन्ने च भिन्नशैशवे शासनक्षमैकमायावर्महरे कुमारे करिष्य(ति ? सि) कदनमात्मनिरपेक्षः प्रतिपक्षस्य कक्षेपु वा कालमक्षयेण तपसा क्षपयिष्यसि। न साम्प्रतमेवेदमद्य कन्यकास्तथा हीति द्विषा हने (?) स्वदेहाहुते रतिसञ्जनम्। अथ यदि यदृच्छामात्रसाध्यमशेषपुरु(ष)कारगोचरानीतमेव मन्यसे महदस्तु

1. L. about 4 letters.
2. „ 14 „
3. „ 20 „
4. L. about 24 letters.
5. „ 15 „

यदृच्छवकस्यार्ति(?)दशायामात्मेच्छया परिवर्तेत देवस्य कल्याणी कुलसन्ततिः । एतेऽपि वयमिह निरुपयोगमात्मानमग्रमरणेनोपयोक्ष्यामह इत्युपराचितप्रणामाञ्जलिः प्रचलच्चूडेन मस्तकेन महीं जगाम।

मशित(?)मधुरप्रश्रयस्तु पृथिवीपतिरुत्थाप्य तमूर्जितार्थं वचनमाचचक्षे— यद् ब्रवीषि मानम्लानमलीमसानपि प्राणानरण्यानीनिलीनः स्वस(न्त्यु? न्तत्यु)पक्रियायै धारयेति, तत्र च चि(न्त?न्ते)यं—परभृतबलावलेपो रिपुः किमितो मुक्तपुरजनपदमपगतप्रधानसाधनमनुचितप्रजोपक्रोशपांसुलमुपरतप्रतापतया प्रोषितात्मच्छायमुष्णकरप्रतापवारणाय कामपि कान्तारपादपच्छायामुपासीनमेनं जनं नानुबध्नीयात्? । आत्मशरीरैकशेषः शफर इव सलिलमूलतलनिलीनोऽपि किमनभिद्रुतो दुर्योधनः पूर्वनिकारस्मरणदारुणेन रुधिरपूरितोदरेण वृकोदरेण? । मानी च मानसारः प्रसारितप्रतापः कृतोपकारश्च पुरा मयास्मद्वैरस्यं मन्यमानोऽपसार्यतया ह्येव राष्ट्रादिना धृतिमनुबद्धस्य वारिणा सुचिरोपार्जितसन्निहिते स्वतेजसि प्रकाशके न शक्यमदृश्येनात्मना बहळतमतमस्सस्सवीव(?) गहनेषु स्थातुम् । नहि नोय(?) निजापदानोच्छ्रितयशःशरीरः शशक इव कचित् सम्भवति गुल्मकुक्षौ । तथा च सत्यनुद्रुतस्य द्विषा सुदूरमपि गत्वात्ममैकान्तिकः[1] शरीरव्ययः । सन्निहि(तं निहि?)तकळत्रस्य मे व्यापत्तौ सापि सन्ततिः संशयमापद्येत । यदर्थमर्थित्वमवर्णोपहते जीर्णतृणलवलघुनि जीवितेऽपि कुर्यायाः सपर्यामपदिशद्भि(?)र्बलवद्भिरागृहीतसारकोशैरपरिभावयद्भिः कालमनुगतप्रधानमूलभृत्यामविदितास्मद्व्यसनवृत्तान्ततया परिसृतगर्भखेदामितोऽपवाह्य देवीं यथोपपन्नैरुपायैरवगूह्यार्थयोग्यानाटविकानस्तुतान्[2] मोदन्तेस्तावदासितव्यं 'यावतो-

1. Shall we read गत्वा स्यान्ममैकान्तिकः?

2. We may read मोदमानै.

पपत्स्यते प्रकृतार्थसिद्धिः । अस्त्येव चेदमनेकप्रत्यूहानित्याम्नाता विपन्नाश्च सम्पदः । दुर्लभा च दुरभिरक्षा च क्षपितशीला च खलैकवल्लभा च निष्करुणा च निष्कारणविलोभनी चालक्षणा लक्ष्मीः । प्रबुद्धजनप्रहत एष पन्थाः । नात्र संशयः । तथापि का गतिः । जातेन जगति जीवितार्थे नियोगतो यत्न....[1]पायवर्गस्य सामादेः शास्त्रदृष्टेन वर्त्मना वार्तादीनां चानुष्ठानम् । तथानुष्ठीयमानस्य चार्थस्य सिद्धिर्दैवमेवोपक्रोशयति न पुरुषम् । अत्रे.......[2] जाये नास्था न पोषणे रक्षणे च विनयाधाने च यतितव्यम् । एतावति पुरुषस्याधिकारः, परं तु दैवं न तत्र पौरुषं क्रमते....[3]श्रियम् । श्रूयन्ते हि कुशलवादयो वनमृगैः स(ग?)हाश्रमेषु वृद्धाः पुनरुपेत्य राज्यं गृहीतवन्तः । प्रतीपयन्ति भव्यमर्थं रमणीयमरमणीयं वा(?) । यतमानस्तु यावच्छक्ति विद्वानात्मानमवाच्यमापादयति । तद(मु)ष्मिन्नकृतप्रज्ञदुष्करे कर्मण्यप्रतिपत्तिनिष्ठुरेण रागपृष्ठप्रस्थितेन चेतसा कुलक्रमाद्गागतस्याप्रभावस्य, सहपांसुक्रीडोपबृंहितस्य स्नेहसम्भारस्योत्तरोत्तरापतितमाधुर्यप्रकर्षस्य परिचयस्य, सर्वरहस्यनिःशङ्कालापसंभृतस्य विस्रम्भस्य, स्वदेहनिर्विशेषानुष्ठितस्य निरुपस्कारकान्तस्य संव्यवहारस्यैकपदे भवद्भिः प्राकृतैरिवानात्मभिरिवाविचारक्षमैरिवानभ्यस्तनयप्रयोगैरिव च न परिम्लानिरानेया । न हि ममैकमालम्बनं पात इत्युपारूढाया युष्मासु सम्भावनायाः प्रलघूनि प्राणतृणान्यवकीर्य प्रतिकृतं भविष्यति ।

क्षणिकेन हि समाधिना साधनीयो जीवितस्य व्ययः । यावज्जीवितेन निक्षेपरक्षणम् । अतोऽसौ रक्ष्यतां निक्षेपः, स्थिरीक्रियतामात्मा, मुच्यतां कातरत्वम्, उत्थाप्यन्तां यशःपताकाः, प्रदर्श्यतां श्रुतप्रभावः, प्रस्थाप्यतां सत्पुरुषवृत्तम्, उद्घो(ष्य)तां तत्त्वदर्शित्वम्, आराध्यतामात्मस्वामिवंशः,

1. L. about 12 letters.
2. „ 24 „
3. „ 16 „

सुहृदश्च क्रियतामपुनर्दर्शनसम्भवादुपनतपरलोकप्रयाणो जनोऽयम्। अस्त्वय-मव्याजगर्जयोर्जित्य(?)निर्जितमरुत्वकार्तवीर्यस्य स्फीतकीर्तेस्तातस्य पुत्रः, पौत्रश्च पुरुषपौरुषग्रीष्मोच्छूषिताशेषसपत्न(स्य?) सम्पत्तेरनवरतरणमहामहस्य पितामहस्य । न हि राजकेसरिणामुदारस्यान्वयस्य युज्यते हरिणस्तन्तुः । अतो निरन्तरम-विरळाविस्तृतशरलतावितानधवळितनभसि रुधिरपटलपाटलस्फुरितबन्धुजीवभूष-णायामजर(?)भीषणायां शरदि विधिबलमपि निजबलेन विपरिवर्त्य पुरुष-सहस्राण्यभूयःप्रबोधनाय स्वापयेयम् ।

अत्र चेदिह भवन्तः प्रतिषेधाक्षरविरसमात्मसाहाय्यदानसम्बद्धं वा पदमनुचितविरहविह्वलत्वादुपा( म ? द )दीरत्नय( म )हमविरळसारदारु-कबळग्रहवलितार्चिषि पीतस्फीतसर्पिषि स्फुरि(त)स्फुलिङ्गविप्रुषि विषमार्चिषि विरंस्यामित्यवसिते वचसि वासवानुभावस्य भर्तुरमोघनिर्गमत्वादुत्तम-पुरुषसङ्कराणाम्, अप्रतिलो(म ? भ)नक्षमत्वात् प्रभुत्वस्यादृष्टक्रियोपचितत्वाद् भृत्यभावस्याप्रतिबन्धयोग्यत्वाद् विधिचेष्टितानामनवसादप्रतिक्रियत्वादनर्थोपचिता-नामध्यवसायसहचरत्वान्महासत्त्वतायाः, व्यसनकालविकसिततया च विद्याबलस्य (म ? )बलवतीमपि न्यक्कृत्य शोकप्रवृत्तिमुद्धृतमप्युपष्टभ्य हृदयमुदीर्णमप्युदस्य रणरणिकामुद्दामामपि नियम्योष्णबाष्पधारामुद्धूतमपि नि(र्वर्त्योत्कं ? वृत्योत्कं)प-मुत्क्रान्तकल्पमप्युपरुध्य जीवितं जीवन्मरणमिवारिमविरामा( ? )रम्यरूपमभ्यु-पयन्तो मन्त्रिणस्तथेति वैधुर्यानिश्चितया वाचा गत्यन्तरमलभमानाः पत्युराज्ञां प्रत्य(वसेत ? सेवन्त) ।

देवीं च विदितदेवार्चनवृत्तान्तां (अर्चनं ?)ज्ञातभर्तृसङ्कल्पतया स्वैरानुष्ठी-यमानप्रयाणोपकरणसंभारामकारयन्। अवनिपतिरप्यु( ? त्यु)दयमिवाभियोगभरेः काङ्क्षन्नतिसत्त्वतया विक्रमरसतिरस्कृतस्वजनविरहदुःखः नि(र्वे ? वृं)तेन चेतसा तमपरभाग(म)हः समग्रां च यामिनीमनैषीत् ।

अथापरेद्युरुदयमारुरुक्षति क्षतजरागपाटले पादपातपरा(ग?)हतक्षुभितगर्ज-द्वाहिनीपतौ पटुतरकरास्फालनोल्लस....[1]न्यतेजस्तिरस्कारिणि रक्तचक्रधारिणि धरणिभृन्मकुटघटितस्पष्टमण्डलाग्रकिरणसंहतौ प्रतिक्षणविजृम्भमाणदुःसहोष्मणि प्रतिपक्षता....[2]द्याधरमप्रस्तुतस्तुतौ सुभट इव रथवराधिरूढे परिवर्तयति कालमात्मगत्यनुसारेण देवे सप्तसप्तौ कृतप्रभातमङ्गलाम(ङ्गले ? ङ्गे)षु प्रौढ-गर्भभारमन्थरेष्व....[3]षु रचितभूषणामुदयगूढचन्द्रमण्डलामिवाल्पाल्पतारका-स्फुरणां शरत्प्रदोष(ब ? वे)लां मौलवृद्धवर्षवराधिष्ठितामनुसृतस्थविरहंसवृन्दामिव मन्दाकिनीं देवीमुत्सुकप्रिय(जा ? जना)नुवर्तनमुहूर्तलम्बितपरिजनाङ्गनाससम्भ्र-मानुयातां पुरस्कृत्य कालदूतैरिव गतिमनिष्टां गमयद्भिर्भर्तुराज्ञाक्षरैः प्रेर्यमाणाः दुःखोपहतमुखत्विषः कृष्यमाणबलावयवा दक्षिणां दिशमभि प्रत्यद्य(?) सकलत्रा अपि त्राणमन्यदलभमाना विन्ध्यगिरिमभ्यवर्तन्त मन्त्रिणः ।

अनन्तरं च सर्वस्यामेवोर्व्यां सर्वक्षत्रपिशुनाः कालरूपा इव चरितुमारभन्त (चो ? घो)ररूपा महोत्पाताः । तथाहि—प्रथममेव स्वभर्तृकाल-क्षयासन्नित्रासादिवोदकम्पत क्षितिः । अभ्यर्णर(तो ? णो)दयादिव व्यजृम्भन्त द्विगुणमुद्गर्ज(य ?)न्तो वाहिनीपतयः । जङ्गमभूभृच्छिरोभङ्गसौकर्यप्रत्ययोत्पा-दनायेव केनाप्यभज्यन्त स्थास्नूनामवनिस्फुरितरत्नोपलानि भूभृतां शिरांसि । समरोत्सुकराजलोकसाहाय्यार्थमिवर्तवः सर्व एव स्वचिह्नलक्ष्याः समन्ततः समं समाजग्मुः । अखिलमिव धरणिपृष्ठमाहवाङ्गणीकुर्वन्तः प्रसभोत्पाटित-निरस्तवृक्षवीरुधः क्षुण्णपाषाणशर्कराः क्षणमपि नोपेर(मू ? मुरु)प्रस्वनाः प्रभ्रमन्तः प्रभञ्जनाः । कालापसर्पा इव कालसर्पाः प्रसर्पन्तः सर्वपार्थिवा-नामाविविशुः शय्यागृहाणि । अटव्या इव दण्डविक्षेपा व्याघ्रादयः पुरा-

---

1. L. about 20 letters.
2. ,,
3. ,, 2 ,,

ण्यरुन्धन्त । राजास्थानेषूदतिष्ठन्नलक्ष्मीपरिवारार्थमिव स्थूलस्थूला रोहितास्त्रियः । प्रवहद्धमहाघबुद्बुदानीवोद्भवद्भङ्गुराणि हीनातिरिक्तपाणिपादान्याशिरांसि(वि ?) विकृतघोररूपाणि मानुषेषु तिर्यक्षु च प्रभूतानि भूतान्यभूतये भुवः प्रतिभयानि भूयसा बभूवुः । अभावचिन्ताकातराणामिव करितुरङ्गमाणामनभिनन्दितयवसपल्लवाना-माननादगळन्नश्रुबिन्दवः । सर्वशक्त्यासङ्ग एव ध्वनिमिव शङ्खदुन्दुभिमुखैर्निग्रहेऽपि स्वशब्दो न व्यसृजत(?) । प्रभूतप्राणिराशिप्रक्षयशुचेव रुरुदुर्देवताप्रतिमाः । पूर्णशशिभ्रान्तराहुशिर इवातपत्रेषु बभ्राम भ्रमरपटलम् । शस्त्रेष्वभन्ति(?)दर्पादिव दर्पणेष्वपि पतितुं नेषुः पार्थिवानां मुखानि । तेजस्विनमर्कमप्यभिजग्मुश्छायात्मानः मानिमां(?) । संप्रहारत्व(र)येव कोशेभ्यः शस्त्राणि स्वयमेव प्रज्वलन्ति निर्जग्मुः । आहूयमानानामारोहणपरिभवसहिष्णुगन्धहस्तिगर्हणायेव तन्मदो हस्तिनीनां कपोलमाशिश्लेष । अप्रणिपातप्रणुन्नानीव मुहुर्मुहु(र)वर्तन्त प्रतिष्ठासूनां वाहनानि । सुदूरमपि गतेष्वेव मनो भाविनी दुःशेत्याद्वेगादिवा-दावेवावन्नातपत्रध्वजपताकादीनि(?) राजचिह्नानि । अभज्यन्त च रथशकटादयः । कतिपयज(व?)नापराधकुपितकाळरात्रिप्रभारचितमेखलाप्रवाळमणय इवाश्रुपाताः शङ्खदेशेष्वलक्ष्यन्त । क्षत्रपि....[1]काः कुजश्च नानाविधा रोद्धुमिव साहसं विलेगुरङ्गेषु (?) । सदसत्तामार्गदर्शिनामिव गुणविपर्ययः कार्यकाले मन्द-तीक्ष्णानां वाजिनामभूत् । पुंगवत्वादिव प्रणदन्तः ककुद्मन्तः प्रतिमुखं बलान्य-भ्यद्रवन्त । अप्रग पापेषि...[2] सव्यं पक्षिणः प्रदक्षिणं च वनमृगाः परिपतन्तो निर्भयं चावगाहमाना व्यभजन्निव सैन्यान्यन्योन्यमामिषत्वेन । काकैरपि काल-सामर्थ्यमिव....[3]तद् ध्यानम्लाना वाजिकुञ्जरमनुवाजामखुरलेलिह्यमानभूतलानां

1. A space for 4 letters is left in this Ms.

2. L. about 3 letters.

3. „ 20 „

च वर्जिनामङ्गानि अभिनभवभिन्नानीव पुष्पचुम्बिन(?)इवाभ्यलीयन्त ....रभन करकबन्धादीनि घोरतराणि दर्शयद्भिश्च वलयप्रतिलोमभीमरूक्षगर्जिताजाशनिभि(?)-रावैरविरळरुधिरमधुवसातैलोपलोरगमकरा. . . .ताटिरिवशङ्कहेमदण्डैश्चण्ड(र ?)मरुद्भि-रभ्यर्दितानां सहस्रधैव सैनिकानामभिद्यन्त हृदयानि । माला(?)समाजप्रेक्षार्थि-दिक्पालरचितहेममञ्चा....दह्यमाना दिशः । क्षत्रक्षोभभयादुद्रसन्तव(?) जुघूर्णिरे गन्धर्वनगराणि । प्रबुद्धप्रहायेन्द्रप्रेषितानीवेन्द्रायुधानि यामिनीष्वदृश्यन्त । भैरव-स्वरविरसविरासिनीनामशिवानां शिवानां प्रत्युत्थीयमाना इवोन्मुखीनां मुखोल्का-भिरुत्काबहुदंष्ट्रापाट्यमानशशलक्ष्मश(शि ? श)रुधिरधाराभ्यक्ता इव प्रज्वलन्त्यः प्रदोषेषु पेतुः(?)। प्रनृत्तमृत्युबाहव इव बहुधा धूमकेतवः प्रावृण्वन् दि(व?)शः । सर्वभूतक्षयदर्शनाक्षमत्वादिव स्वयं सुततारकान्धकारि(का ? ता) द्यौरभूत् । तादृशीं दिवमिवानुशोचन् प्रशान्ताङ्गारनिष्प्रभः प्रभाकरो रिपुणा स्वर्भानुनाभ्यसूयत । रामलक्ष्मणाविव मलिनसन्तापिनौ सोमसूर्यौ कबन्धेनोग्रं जग्रसाते । तदेवं भौमान्तरिक्षदिव्यैर्महोत्पातैर्वार्यमाणमपि राजमण्डलं मगधमालवेन्द्रयोराज्ञया कालदूत्येवाकृष्यमाणं समाजगामैव समराय

तदा च राजा राजहंसः सज्जभूयिष्ठसैन्यमण्डलो महादर्शनं(ददा ? मा)लवेन्द्रदूतं द्वारप्राप्तं द्वारमुखादुपलेभे । ज्ञातप्रायप्रयोजनस्तमीषदाविद्धमन्युना मनसा मानवेशः प्रवेशयामास ।

प्रविश्य चासौ राजानुभावजनितसाध्वसं हृदयमभिनिगृह्णन् ब्राह्मणायनो दक्षिणपाणिमुद्यम्य स्वस्तिशब्दमुच्चैरुच्चारयामास । रिपुवचोहरं च तमग्राम्याभिजा-

1. L. about 28 letters.
2. „ 16 „
3. „ 5 „

(त्य)सौम्यरूपमनिष्ठुरप्रगल्भदृष्टिसञ्चारमाकृतिप्रत्ययाद(प्र ? प्रा)कृतोऽयमित्यवधार्य (तग ? द)भासने सज्जनादनुजग्राह मगधराजः ।

आसीनं च तं मुहूर्तविश्रान्तमुपगृह्य निसर्गस्निग्धया दृशा मालवेश्वरस्य क्षेमारोग्यं पप्रच्छ ।

दर्शितादरस्तु दूतस्तथेति क्षेमारोग्यकथनानन्तरमनुक्रमेण स्वमागमन-प्रयोजनमित्थमाचचक्षे—देव ! देवेन मालवेन्द्रेणास्मि भवत्सकाशं कुशलवार्ता-परिज्ञानार्थं प्रहितः । स्निह्यति स राजा निसर्गतोऽत्र निबद्धपक्षरागः । निष्कारणमे(व)वा जन्मान्तरनिरत्ययप्रवृत्तकर्मवासनाबलेन वा देहारम्भकभूतभूम-सामर्थ्येन वा दर्शनमात्रेणैव क्वचित् कश्चिदारोपयति पेशलं प्रणयम् । अल्पेतरं चाप्रतिसंहारदारुणं द्रोहमितरत्र । सैषा लोकस्थितिः । स्मरति चासौ माहात्म्यनिबन्धस्य निर्व्याजविजृम्भमाणवीर्याहृतहर्षविस्मयस्य वमद्वह्निवर्ष-भीषणप्रहरणाभिपातव्यतिकरस्य कातरभयासनस्या(ष्टा ? न्या)दृशोदारपुरुष-स्वादीयसः सम्प्रहारपरिचयस्य । तानि तानि तत्प्रतिब(न्धा ? द्धा)नि शौर्यत्यागसत्यौर्जित्यसंहितानि कथान्तराणि रसातिरेकेण पुळकितकपोलः सभासु सम्प्रवर्तयन्न तृप्तिमेति । आह चैव मन्मुखेन स(र ? म)क्षमिव स्नेहचक्षुषा पश्यन्निह भगवन्तम् । धन्यं बत मानुष्यकं यत्रासि....[1]सुभगा बत भगवती भूतधारिणी या त्वया सनाथीकृता । सैव च देवी महाभागा स(हस्र ? )मग्रदोष-दुष्टायाः सीमन्तिनीसृष्टेस्तीर्थस्नानशुद्धिरिव पाप....[2]वानल्पतेजा दिशः प्राच्याः समध्युषितवान् नस्य नादा मा जवं जवेन विकालस्रोतस्यद्यापि(?)किञ्चिदेवंभूतं

1. L about 5 letters
2. „ 18 „

भूतपूर्वम...[1]तेजस्वी चक्रवर्ती देवस्तिग्मरश्मिर्न भ(वस्त्रा?वा)निवानेकराजमण्डल-क्षपणयोग्यां शक्तिमुद्वहति, नोच्चलितधातुरागरक्तान....[2]नेकवर्णानन्दमुदीर्णहंस-शब्दो विकरोति न क्षत्रकुलानि चानेन तेजसा तिरस्क्रियन्ते । कामं च महाबलः प्रभञ्जनात्मा चाञ्जनाहृदयवल्लभ....[3]क्रान्ताश्च पुनरनेन बलजवलुलितसकलजल-धिवेलावनेनावनेरवनमयता शिरांस्युच्छ्रितानामनेकशश्चक्रवाळम्, अपि तु नित्यं भवानिवापांसुलै....[4]यथा प्रवर्तितुं कृतप्रतिज्ञः । कृतार्थजन्मनश्च तानवैमि येषां महाहवेष्वत्रभतवः प्रतिव्यूह्य विरतानामिहाभूतसम्भवस्थास्नु स्थितं यशःशरीरम् । परत्र च वीरकळत्रश्लाघाभावनीभिरनघयौवनाभिः सहाप्सरोभिरुत्फुल्लकल्प पादपपारिजातसन्तानकमन्दारासु नन्दनवनभूमिषु मन्दमन्दं मन्दाकिनीतरङ्ग-वायुभिरायासितबालचामीकरारविन्दसरःशतैरङ्गानि सुरतखेदसुप्तानि संवाह-यद्भिरानुगुण्यसन्ध्युक्ष्यमाणकन्दर्पाशुशुक्षणि रममाणानां प्रदक्षिणीभवत्यखण्डकल-कल्याणराशिः । मम तु मन्दभाग्यस्य बहुतिथममलप्रहारजनितमोहमूर्च्छान्धकार-मुषितचेतसो रणाङ्गणतलास्तीर्णकम्बलशयितस्य शिरसि मदूर्जितप्रतिगर्जिता-र्जितामर्षेण त्वया स(हृ?)रभसाभिघातखण्डितकरण्डकोच्छलवृत्तलण्डजटिलिताम्बरं चरणमनवशेषक्षत्रियसमक्षं निक्षिपता निस्तीर्णतुङ्गसङ्गरभरलघुरात्मा कृतः । कृतश्चाहं हास्यवस्तु निस्तलवृत्तकीर्तिमुक्तावालिमण्डनानां मनस्विनाम् । सुभरो हि भारः क्षितेरुपरिलग्न उच्चैःशिरसां, न तु लघीयान् परस्य पादरेणुः । परचरणाक्रान्तमस्तकस्य च मनुष्यस्योष्णीषमिवोत्तमाङ्गाश्रवर्ती दूरमपनीयते

---

1. L. about 30 letters.
2. ,, ,,
3. ,, 18
4. ,, 3 ,,

जातिधवलं वीरव्रतम् । उत्तंसमधुकरकुलानीव झटित्युत्पतन्ति स्वभावमलीम-सातिनी वक्त्राणि (?)[1] । कुसुमस्रज इव कोमलावदाता म्लायन्ति कीर्तयः । वासचूर्णप्रकर इव प्रयत्नगोपितः प्रक्षरति कुलाभिमानः । चूडामणिरिव स्फुरितरागश्चूर्णीभवत्यहङ्कारः । केशकलाप इव दीर्घता संवर्धित याकुली. भवति प्रभावः । भावाश्च पुनरभावा एवास्य । मन्य परम्पराकस्याम्मिन् ?) मूल एव निकृत्य मस्तकेन महीस्पृशा परेण पातिते छिन्नारोपशाखे शाखिनीव कम्रचम्रधारा(?)[2] दारयन्ती हृदयमतिनिष्ठुरा पतति लौकिकानामवज्ञा-दृष्टिः । अतस्त्वामेकवीरं भूयोऽपि समरप्रवर्तनाय प्रार्थय । यत्रैष चलित-वीरबाहुपादपवननपवनवाहिनी(?) ममावकीर्येत महानवमानराशिः, तदति-भारनामितं वा दुरुद्वहं शिरः । श्रेयानसावेक एव य. शिलीमुखप्र.. पातकवचिताशोकपुन्नागनागव्यूहेषु सम्पूर्णे काममूर्छान्त्रपरम्भृतश्रोणिखलाकुला-रण्यके स्फुरत्प्रभासिलतावनादट्टासभासुरेषु(?) रणत्रस्नवलरेषु वीथाथी-विहारशीलः स्थानदत्तदन्तखरतरनखरप्रहारो रागपाटलमोचनादरः सरभस-दष्टदन्तच्छदो रसकण्टकिताङ्गयष्टिर्लीलायमाना विजयलक्ष्मीं सकचग्रहं स्नु-माकर्षति । तद्दधान परिकरम्, उद्दामदर्पनिर्भरभटाकुदभूहत्कलबरोतमघने तु बन्धस्खलितत्वाहिनीबलकीलालवाहिनी (?) कार्तवीर्य इव कर्मुमसूर-मुग्राणि च तानि....[3]वल्लभानि भूयोऽपि प्रभूताम्भःपम्भारधमातलम्बादरा-म्भोधरध्वानगम्भीराणि नर्त्यमानहसभटशिखण्डिमण्डलानि कण्ठगर्जितानि तत्र छ....[4]मुखविहारसिन्दूरालिन्दसुन्दरामिन्दीवरपत्रनीलवर्ण (ला ? या) कालराज्येव त्रासयन्त्या जगद्विजृम्भिकाभिर्विकटकुटिला भ्रुकुटिरेखा...[5]द्वयं लोचनयुगळ. गळतुहारो(?) भारतसमर इव सम्भत्यपि समस्तदंसक्षत्रपक्षस(र ?)क्षयेण क्षिते:

---

1. We may read मलीमसानि वाक्यानि.
2. Shall we read क्रकचाग्रधारा.
3. L. about 5 letters,
4. L. about 24 letters
5. „ 50 „

क्षरितक्षतजकुल्या...[1]लेषु रुधिरचन्दना( र ? नु )लिप्तमूर्तयस्त्रिदशवारविलासिनीसाभिलाषकटाक्षलक्षिता विलसन्तु विक्रमक्रीडया यौधपुरुषाः। प्रतिरोमकूपनिपातितनि....[2]जर्जराणि प्रवीरमांसानि परिहृत्य रक्तपानमाचरतु प्रनृत्तश्रान्तः पिशाचवर्गः। संवर्ततां च व्यवशान्तदर्पोष्मणा सुभटजीविताहारोपहारेण भगवान् वैवस्वतः। स्वतन्त्रश्च सुमानि मर्महा वीरमुत्सृज्य सुखाशयः कुलोद्यतो मुखं प्रधावन्ति(?)। इत्येष वः समरसम्बन्धिनो यशःशरीरकल्याणकामस्य माळवेश्वरस्य मदाननार्पितः सन्देश इति।

उपसंहृते वचसि वचोहरेण स्मयमानमुखो महीपतिः प्रतिव्याजहार—समर्थमिदं समग्रम्। अर्थो हि महात्मनामनुच्छिन्नसन्ततिर्यशःप्रवाहः। स च विना पुरुषकारादनन्यसा-ना(न?)धीनः क्षत्रबन्धोः। लक्ष्मीरपि बाहुदण्डनिर्दयभ्रमितभूभृन्मण्डलेन चाकर्षणीयेति सुरासुरामृतमथनमार्गेणैवायमर्थो निर्णीतः। परलोकविजयद्वारं च राजन्यस्यालभ्यमानमहापशुकृतरुचिराज्यावर्तनोपबृंहितप्रतापानलो महावीरविजृम्भणातिभीषणः प्रस्तुतशस्त्रव्यतिकरो मदकारणकल्पमनामृतायमाणसुरांशसुचिरयमध्वरो(?) मरणात्मको विधिचोदितत्वादाहवो नाम। नेदृशमपरमकृपणमस्ति त्रिवर्गसाधनं यथैतत् प्रथनकर्मसत्र( प ? वि )जयसाधितचतुरन्ताधिपत्यजीवनं मरणलभ्यस्याभ्युदयस्य बलप्रतीहारः(?)। किं बहुना युद्धं नाम सिद्धिसुखानां प्रथमम्। एवं चातिरमणीये कर्मणि प्रवर्तयितुकामेन चामुना विशालेश्वरेण यत्तत् प्रियतममतिबहळकथितं तत्पुनरमृतवायनोपच्छन्दनमिव लक्षयामि।

अथवा नैव जानात्याभिजात्यं प्रियादन्यल्लापायितुम्। इच्छंश्चास्मत्प्रियहितैषिणा मानसारेण माळवेष्वेव सन्निपत्याहवशिरसि तत्सन्देश-

1. L. about 25 letters.
2. „ 16 .

वस्तुनः प्राप्तरूपं प्रतिव्याहरिष्यामि । अथवा पुण्यतमः प्रयोगोद्देशस्तत्रैव नोऽस्मागतोऽस्तु(?) । कामं च वासरोऽयमननुकूलस्तदपि न कार्याराधनक्षमः । कालक्षेपो मङ्गलतिथिनक्षत्रेष्टत्वं हि लाभविघ्नमवज्ञमध्यपतेर्मध्यचित्तकैः(?) । अतोऽद्यैवाभियोगाय सन्नह्यतां सैन्यम्, उद्घुष्यतां प्रयाणाय पटह इत्युपरचिताञ्जलिमुपस्थितं बलाध्यक्षं हर्षनामानमादिदेश । दूतं महत्यार्थपूजया योजयित्वा हृष्टवर्णं यथादिष्टनिवेदनायाग्रे विससर्ज । स्वयं च सन्नहनग्रहणाय विसर्जितराजलोकः सिंहासनादुत्तस्थौ ।

उत्थिते च राजन्युदधिरिवोदचलदुत्क्षेपडोलायमानतरळतरङ्गफेननिकरनिर्गमोत्तरीयसमन्तः सामन्तलोकः । सम्भ्रमोत्थितानां चेतरेतरास्फालचालचालभुग्नभुजारत्नकोटयो जगररिवाभ्यर्णाजिकर्मभूरिगर्वः(?) । भूभुजां भुजागळागळितगण्डमूलमदरागनिर्मृजानि भैरवरणवार्ताश्रवणविह्वलानि वामांसावसक्तचारुचामराणां वारसुन्दरीणामामन्त्रचन्द्रमण्डलपराहतप्रभाणि....[1] नानोपहारकुसुमभक्तिधूसरच्छवयश्चलितजनचरणशताभिघातभग्नपक्षतीनां षट्चरणकदम्बकानां शिञ्जाननितम्भरत. . .[2] नाधन्यताप्रातमात्मानमिवानुशोचन्तश्च्युकुसुममणिकुट्टिमाः ।

नरपतिरपि कुब्जवामनकिरातप्रायपरिजनगणपरिवृतो ....[3] नगालिनी नीललोहित इव कैलासगह्वरमभ्यन्तरमविशत् ।

अथैनं सांवत्सरः सह पुरोधसोपसृत्य विज्ञापयाञ्चकार—देव गुरुभार्गवगर्गाद्यनेकाचार्यसन्दर्शनमार्गयाथातथ्यवेदिनो देवस्य यत् फलानि नावगाहते

1. L. about 18 letters.
2. „ 28 „
3. „ 18 „

मतिरतोऽयमर्थः प्रत्युच्यते । कथं नु गुणमवधारयत्येवंभूते भूतवैकृत्ये अत्युग्रविग्रहेषु सांख्ये वह्निदैवत्य रक्तवारे चास्मिन्नक्षत्रे तिथौ नवम्यां दिशं प्रतीचीनमारब्धायां कयान्मायागमप्रमाणो देव इति(?) तमसावतामसाशयः प्रत्युवाच—युक्तमिदमार्येणास्मि प्रतिबोधितः, किंतु भूविजयैषिणामेष मार्गो यद्दिनादिसम्पत् प्रतीक्ष्याम इति । स्वर्गविजयैषिणो विपरीतमेव शोभते । प्रजोपपीडाशान्त्यर्थं तु दुर्निमित्तशमनदृष्टशक्तयः शान्तयः क्रियन्तामित्याथर्वणिकमैक्षत ।

सोऽपि ननूत्पातानामारम्भात् प्रभृत्येव दीक्षानुरूपं गृहातिथ्यमुदकग्रहणं वास्तुशमनं निर्ऋतिहोमः पृथक्तन्त्रमप्रतिरथो दक्षिणेत्यष्टानामष्टादशानां चामृतोवाक्कल्पनां रुद्रेन्द्रवरुणवायुकुबेरविष्णुसन्ततित्वाष्ट्रप्राजापत्याग्निकुमारनिर्ऋति रुद्रगणगन्धर्वैरावतपृथिवीलक्षणाना भयायाश्चाभयार्थाया महाशान्ते(?) घृतकम्बलप्रभृतीनां च कर्मणां पुण्यतमानामन्येषां चाथर्वदृष्टानामनुष्ठानं क्रियत एव । यद्येष एव सर्ग स्वस्त्यस्तु देवस्य भवतु विजयाय स्नानमङ्गलमिति पुरोहितस्य वाचमनुरुध्यमानस्तदुपदिष्टेन वर्त्मना कृताभिषेकस्तेजःस्पृहयेव मनुष्या विधिवद्भगवन्तं भानुमन्तं द्विगुणयन्न पुरो(धाः? धसा) पुण्याथर्वणशान्तिभिरद्भिरभ्युक्षितमौलिः शुक्लमाल्याम्बरो जगति जातस्य दुर्जातजातस्य शान्तये कृत्स्नमेव कोशजा(तं) द्विजातिसाच्चकार ।

ततः क्षणादरुणरागरञ्जितदिनमुखानुकारी हरितभुवनाभ्यन्तरविवरो(?) दिनकरमण्डलस्फटिकपाटलीकरणपिण्डालक्तकरसः पिण्डितसकलजगदुपप्लवद्रुमारण्यानीदहनदावानलः खलकलिक्षणदाचरकटकलुण्टाककाकुत्स्थकपिलायमानो गगनसरःकमलराशिरंशामुखरोचनाच्छरणकल्पः कल्पयन्निव कल्पितहि(र)ण्मयाण्डसम्भवं कल्पमूल(?) दिवमुत्ससर्प विप्रगणप्रहर्षप्रसारितस्य मेरुशिखरविवरस्य(?) कनकराशेग(म? र)क्तशकविलासिनीकपोलद्युतिरतिमहानालोकप्रवाहः । यस्य च विजृम्भमाणस्यावकाशदानार्थमिव तिरोधत्ते स्म समग्रा

दुर्निमित्तसंहतिः । अनेहसां च ब्रह्मसङ्घानां यथाभिलाषं हेमरत्नानि स्वीकुर्वतादिति बभूवुरुच्चावचाः प्रचुरविस्मयगुरुकुतू(ह)लचलितपक्ष्मलोचनाः प्रलापाः । लब्धमिदं प्रभूतमर्थजातं, शक्यमनेन सोमसंस्थाः कर्तुम् । पूर्णमिदं सुवर्णमसक्तमवाप्यते न सर्वार्थ्यम्(?) । एष महाहिरण्यराशिः, कार्यमनेन सारामं प्रातिवेश्यं गृहनिविष्टाय मे ज्येष्ठपुत्राय । भ्राजिष्णुरयं प्रभूतपूर्णमासीन्दुमुखो मुक्ताहारः, प्राय इमं प्रतिमोक्तुं ब्राह्मणी मे जिह्रेति । सकल एष कन्यालङ्कारः, दास्यामि सुतामनेनालङ्कृताम् । एष विषहरो हरिन्मणिः पवित्रतमश्च, बन्धयाम्येनमस्मिन्नङ्गुलीयके । महार्होऽयं जातिरागः पद्मरागः कृत्यमनेन चिन्तयन्नपि न पश्यामि । हेमरत्नचित्रोऽयं मेखलाकलापः, इदानीं यथार्हेण मूल्येनैनं ग्रहीष्यति । कथमयमष्टसहस्रयष्टि....[1]यान्यवन्तमनेन मा करिष्यति । बन्धुरोऽयं भङ्गिपर्वा विद्रुमाङ्कुरः, करोम्येकं बालकस्य कण्ठाभरणम् । एतानि प्रमाणवन्ति प्र....[2]किञ्चित् पितुर्मे कर्णमुद्रिकायामर्पयिष्यते । तदिदं कलितपनीयं नाम पञ्चवर्णः सुवर्णयोनिरुत्तमवर्णः । इमानि तानि....[3]दिव हैमवत....[4]षाणि शुक्तिशङ्खप्रकीर्णयोनीनि मौक्तिकानि । त एते वैडूर्यशिरीषपुष्पकादम्बवंशरागेन्द्रनीलचन्द्रकान्तादयो मणयः । तानीमानि नानागन्धवर्णानि लाघवादियुक्तानि चन्दनानि । त एते विविधवर्णगन्धगुणयोनयः कालागरुतैलपर्णिकादयो भोगद्रव्यसम्भाराश्च । रत्नमिदं नीलकण्ठकण्ठकान्तनामकं प्रैय्यकमेनन्नीलपीतश्वेतलेखतयेन्द्रायुधोद्गारिबिन्दुचित्रं च, सा चैषा द्वादशग्रामीया द्वादशाङ्गुलायामा विसी महाविसीची च(?) । श्यामिकेयं कापिला बिन्दुचिता च । कालिकेयं कपिला कपोतवर्णा च । कदलिकेयमपुरुषहस्तायता च । चन्द्रोत्तरेयं चन्द्रचित्रा । व्याकुलेयं(?) कदलीनिभागा कोलामण्डलचित्रा च ।

1. L. about 15 letters.
2. „ 10 „
3. L. about 1 letter.
4. „ 24 „

बहून्येतानि स्निग्धबहुलरोमसुकुमाराण्यजिनरत्नानि। आविकोऽयमनेकयावनप्रकारः क(द?)म्बलादिः। एषा वङ्गपुण्ड्रादिसम्भवा दुकूलजातिः। एता मगधपुण्ड्रसुवर्ण्यकुड्यदेश्यनागलिकुचबकुळवटयोनयः पत्रोर्णाः। कौशेयमिदम्, एते चीनपट्टाः, कार्पासिकमेतत्, तदापरान्तिकम्, एतन्माधुरं, माहिषकमिदम्, एष कुप्यराशिः कोऽस्य वोढा दृढं बधान रत्नभाण्डं यथा पथि न भ्रश्यति। भरो गरीयानशक्तोऽयं बोढुम्, अयि धिक् त्वां मोक्तुमेव जातम्। उद्धर यत्नेनारोपय स्निग्धमुद्वह(न् स?) भज्यतेऽद्य स्वाध्यायः। कीनाश किं ममाङ्गेऽपि हस्तमर्पयसि, कोपनक स्वमेव तावन्मे दूरमुद्वह। हा दृष्टसारं मे फल्गुना विपरिवर्तयसि। दुर्मुख! दृष्टमेभिः सारतरं मया लब्धमखरकमर्कर्करमकक्षुकमयमकमरकमकर्मकमसिक्तं च मे मुक्ताजातमिदं तुष्टः कथं कथमिहागतमसन्तुष्टकिष्टदुष्टैनैकेन(?) बहूनि निस्तलस्थूलवृत्तस्निग्धभ्राजिष्णुगुरुश्वेतदेशविद्धान्यमूनि मौक्तिकानि, प्रभूतान्येतानि जातरूपरूप्यताम्रपात्राणि। त्वमपि चैषामर्थमुद्वह, महादानमिदं प्रवृत्तम्। अहो महात्मा महाराजो नैवं नापराह्णिकः कर्णो राजा वा युधिष्ठिरो दृष्टवान् वसूनि(?)। कारणमत्र मन्ये मन्त्रिणामसन्निधिः। मा मैवं, न तेऽपि शुष्कषाड्गुण्ययोगश्रद्धारुद्धपरलोकदृष्टयः। हंसश्चायं हंसपरिवारश्च। सर्वथा समर एनं रक्षन्तु शक्रमुख्या लोकपालाः। लभतामयमष्टादशद्वीपलक्ष्मीपरिग्रहमग्रेसरं चक्रवर्तिनामत्यादित्यतेजसं तनयम्। इत्येतानि चान्यानि च यथाश्रद्धं व्याहरद्भिर्वहद्भिर्वाहयद्भिश्च द्युम्नजातं द्विजातिभिरुपरुध्यमानेषु वर्त्मसु बलनिर्गमदर्शनबद्धरागैः पौरयुवकदम्बकैरन्योन्यविमर्दसम्बाधमारुह्यमाणासु सौधहर्म्यवळभीसभाप्रदेवतायतनचैत्यवृक्षप्राकारवलयप्रतोळीषु भर्तृस्नेहविह्वलाकुलाबलालोचनजलप्रसरनिरुद्धनिर्गमानां प्लव(?) इवापतति दृढतरे सेवाधर्मसरणे हरिहयवज्राभिपातघर्घरितकुलगिरिगुरुशिलापक्षनिर्घोषभीषणं रणितमाततान प्रयाणदुन्दुभिः।

दुन्दुभेश्च प्रळयाशनिदण्डचण्डपातेन बालिभुजेनेव हेमकोणेनाभिहन्यमानस्य रसितमाकम्पितत्रिभुवनमन्तेषु दिशां दशानां चस्खाल। येन

सरभसमाहतो भीत इव प्रतिखबलविषमवलदजगरभोगजिह्मैर्गुहामुखैः सुतरामाररास लोकालोकः । यस्य च शिखिकुलानीव जलधरारसितस्यानुनेदुरुद्दामरोमहर्षणानि सकलस्यैव बलसमूहस्य सन्नाहतूर्याणि । तस्मिंश्च मुहूर्ते मुखपवनापूरितो भीत इवादरेण सजीवेनेव तारतरं शब्दयमानेन....[1] मण्डलेन संवर्त इवोद्वर्तन्त चटुलतरतुरङ्गतरङ्गपङ्क्तयः । परिप्लवप्रवरशस्त्रपण्यप्रपूर्णरथानीकनियुतप्रोतव्राता(?) स्फीतजनघनौघरुद्धदशदिशश्चेत....[2] जलधयः ।

भूपतिस्तु पुरोहितोपदिष्टेन वर्त्मना विधाय सर्वं प्रास्थानिकं क्रियाकलापं चन्द्रालोकमयमिव नेत्रनिवेशाभिराममधवलमंशुकयुगलमुद्वहन् ....[3] शरदभ्रकुलेनेव कल्कतेन(?) तदनुसारिणा चन्दनेन कृतसमालम्भनः प्रतिमुक्तमौक्तिकप्रायसकलभूषणो भीमानभीरपिशुनं तावर्षमिवातिदर्पादात्मनैव(?) लीलया दधानो, धवलमालतीसितमुखमुकुलकल्पितमुण्डमालिकाकुसुमकोमलया भ्रमणीयदिगन्तरालालोकनयारूढाग्रलवाग्रेसरसर्वोच्चैःशिरसात्मकीर्त्या सर्वशुक्लश्च, कैलास इव दशमुखबाहुदण्डश्चक्रे(?) सकललोकपालोत्कम्पनकारिणि द्रढीयसि व्यवसाये वर्तमानः, स्थानदत्ततरुणतोरणजालजटिलपालिकासहस्राविभिः(?)नवकमलिनीहरित्वर्णप्रस्तररत्नकुट्टिमादुपरितलाधःपार्श्वदत्तकीलिलम्बमानरत्नकाञ्चनकुसुमसञ्चयसुखसञ्चारेण मणिमयालिन्दवर्त्मना पद्मरजःस्पर्शपरिहारायोर्मिकरकमलैरिव स्वप्रतिबिम्बकैः पदे पदे धार्यमाणचरणश्चरणाभ्यामेव निर्जगाम ।

निर्गत्य च प्रसरत्यपि प्रणामलालसानां वसुमतीपतीनामुन्मेषिणि चूडामणिमरीचिजालातपे ससम्भ्रमावर्जितमकुटप्रच्युतापीडकुसुमदोलायमानमधुकर-

1. L. about 7 letters.
2. „ 24 „
3. „ 18 „

कुलान्धकारकल्माषितं कुड्मलायमानकोमलाञ्जलिकमलवनसहस्रं चित्रीयमाण-
मम्बरतलं ददर्श ।

जय जयेति च तारतरमुद्गायतो वन्दिवृन्दस्यामन्ददुन्दुभिध्वानानुयात-
मायतशङ्खशब्दमिश्रम् अतिकलकाकलीकलितकाहलरणमूर्जितप्रहतमर्दलस्निग्धनि-
नादमांसळमनुसृतकांस्यतालसंकुलमालोकशब्दमालोकयन् (?) आकर्णपल्लवमाभूमि-
लम्बबालनीलचामरकलापाममलकार्तस्वरकलितालङ्कारकान्तां चारुकोमलपुष्करकरां
जयलक्ष्मीमिव जयलक्ष्मी ....[1] ससम्भ्रमाधोरणसंज्ञानिवेदितां द्विरदकन्यका-
मारुरोह ।

आरुह्य च हंसतूलगर्भप्रदिष्ठचीनपट्टोपधाने परिस्तोमवत्यनेकरत्नचित्र-
पर्यन्ततया यात्रारम्भयोग्यानीन्द्रमिवादौ जित्वा गृहीतानीन्द्रचक्राणीवावहति
सुविहितप्रहरणाचापे(?) महति कनकपर्याणके सुखनिषण्णः पश्चिमासनगतेन
हेमाङ्गदवलयरत्नहारदीधितिस्तबकचित्रवारवाणेन बाणदेवनाम्ना सामन्तपुत्रेण
कल्पवृक्षेणेव फुल्लरजतपुण्डरीकस्योह्यमानस्य मध्यार्पितमहामणिमयूखपटलपाटलां-
शुकचितलीलावेष्टनस्य बालातपरक्तशारदाम्भोधरानुकारिणश्चामीकरविकट-
दण्डस्य प्रलम्बतरलस्थूलमुक्ताकलापस्मेरपर्यन्तभागस्य महतः श्वेतातपत्रस्य
निसर्गशिशिरच्छायया वार्यमाणमार्ताण्डकरावलेपः, पक्षकरेणुवर्णिनीभिर्वारयुवतिभि-
राधूयमानचामराभिः प्रावृण्मेघ इवोपान्तचलबलाकाभिरभ्रालोतसंगिनीभि (?)
सौदामिनीभिरुल्लासमानः समतिक्रम्य दुरुच्छ्वासं वहन् महाजनत्वाज्जगदुद्धारिणीव
समग्राणि(?) सकुतूहलपौरसुन्दरीजालमालमार्गप्रहितलोचनसहस्रसंछादितामुदञ्च-
दुत्पलप्रचयमेचकामिव भवनदीर्घिकां राजहंसो राजवीथीमवजगाहे ।

नगर्याश्च सपदि बलभरपीड्यमानभूभागशिथिलमूलडोलायमानभवनमण्डला-
या(त ?) मत्तगजकर्णतालपवनपराहतध्वजपताकाया भर्तृवियोगदुःखात् सभुज-

1. A space for 5 letters is left in the Ms.

विक्षेपं व्यावेष्टमाना(ना? या) इव बद्धजनकोलाहलमतिमहदाकुलत्वमलक्ष्यत । बाष्पजलबिन्दव इव नगरदेवतानामवनिपतौ पेतुरार्द्रवंशवलयन्तो(?) लाजमुष्टयः । कृष्णागरुधूममण्डलग्रस्तमन्तरितमिवान्तरिक्षमवनिपालका(त्रां ? त्रायां) विजयांसता[1] जीमूतपटलेन । ध्वजवनमरुद्धूतकरिकुम्भसिन्दूरधूलिमिलनारुणं रणोन्मुखस्य राज्ञः कनकनाराचैरिव दारुणैस्तरणिमरीचिभिरम्बरशरधिरापूर्यत । निर्ययौ च नरपतिरण्डादिव हिरण्यगर्भो लोकमाकर्षन्नगरात् । नगरे च तस्मिन्नन्योन्यविमर्दस[2]........सेतुबन्धरुद्धरेवाजलप्रवाहानुकारीणि प्राचारिपुर्दिक्चक्रवालमाबद्धकळकळानि ।

तत्र केचिदुत्तमहयैरष्टहायनैस्तूर्णपदाहरणपूरितातिरक्तं पर्वा[3]....मुहुर्मुहुर्जवमिवोद्गिरद्भिर्जागतब्रह्मचर्यसमावृत्तैरिव क्षिप्रप्रयुक्तपाणिग्रहणैः काश्यपीयपाठकैरिव क्रमकृतावाल(?)स्थितिभिर्विजिगीषुभिरिव टशीतलवुपदानुवर्तनव्यसनविग्रहैः(?) समरशिरःसमाधूननैरुपेतेन मार्गवल्गिभिः प्रजग्मुः(?) ।

अन्ये प्रततमहोच्छ्वासारम्भक्षुभितमूलमिव स्तुव(?)माधून्वद्भिश्चिरकृतबन्धस्थापनत्वादिव रुद्धगत्यावेष्टमानैर्विक्रमकौशलादिव बलीमुक्तान्धुरं परिपीडितामुद्वहद्भिश्चतुरः शते(?) वामे वामैर्दक्षिणे दक्षिणैरन्तरा च लङ्घयद्भिस्तूपचालीमार्गवल्गिभिस्तुरङ्गमैरगमन् ।

अपरे समुच्छ्रितपूर्वकायतया विलम्ब्य दर्पहारावष्टम्भादिव जघनभागेषु वमद्भिरुन्मृशद्भिश्चापमृश(द्भि)श्च शिरसा पादैश्च तदनुरूपैः पवनजवजयादिव महिलालं(?) विलम्बयद्भिश्च श्लाघितमार्गेण वल्गद्भिः सप्तिभिः प्र(त)स्थिरे ।

तथापरे परिपीडितसकलांगमचलिताक्षमत्याभुग्नगात्रं सुस्थितासनबालं चरणचतुष्टयसमुन्मुक्तपृथ्वीतलमनत्युच्चमजिह्वा इवापोषन्त(?) ।

---

1. Shall we read विजयं शंसता.
2. L. about 16 letters.
3. „ 5 „

केचिदुह्यमानचरणा इव क्षिप्रमुक्तभुवो विनमितोर्ध्वकन्धराः सङ्क्रिरन्त इव पाणिभ्यामुरगा इव प्रारभन्त लङ्घयितुम् ।

त(दै?थै)के वाह्लीकाः संपिण्डितपूर्वगात्रमवरार्धविकृष्टं वैहायसं वाधानमवलम्ब्यातिकीर्णं(?) कलविङ्का इव सहितं नाम नीचैर्गतं मार्गमदर्शयन् ।

अन्ये वैहायसोरस्कं सुसंरम्भविलम्बितमुभयतः सुविस्पष्टोदाह(?)पादान्तरमविरतायतरश्मिप्रमुक्तमायतं नामानुतिष्ठन् ।

अपरे केदारविषमकर्दमाश्मधानादिषु वाह्यमानप्रतिपन्नपाणयो नतवंखनश्रमेऽप्यतिष्ठन्तः सन्नं नाम समभिपेदिरे(?) ।

तथापरे मण्डलीलया प्रनृत्यन्त इव गच्छन्तस्तथा च वक्रतरं वंखन्तो वाह्यानुवृत्तं नामाभ्यवर्तन्त ।

केचित्तु नीचैर्गतेषु शोभनतरं किञ्चित् किञ्चित् पूर्वार्धोपवेशनमल्पसंक्रान्तिविकम्पितशिरस्कं प्रकीर्णगात्रं प्रकीर्णकं नाम प्रायोजयन् ।

अन्येऽनल्परत्युपविष्टा(?) परार्धदर्शितक्रीडाकारवंखितप्रकीर्णगात्रं प्रकीर्णतरं नाम, केचिदर्पितपूर्वगात्रा वेल्लितजानुकूर्चकूणिताः सुनिवेशितशरीरा धेनुदञ्चितोद्यतमल्पे संक्रान्ते(?) वहन्तः संवृतसमशिरस इव वेल्लितं नाम, केचिदाशु गृहीतपाणयो विभक्तपार्श्वसङ्क्रान्तयोऽपरार्धनिषण्णखेलगामिनः(?) सिंहागतं नाम, केचिदचिरभास इव पूर्वगात्रास्थिताकाशाश्चरणैरञ्चितोद्वेल्लितैः समविभक्तपार्श्ववंखिताः स्वास्तिष्ठाहितं नाम, केचिदञ्चितवामचरणा दक्षिण बुलुखित[1]भूतलाः शिखासाभिविधितोऽल्पे संक्रान्ते वहन्तो निषण्णाचलिताः(?) शारभं नाम, केचिदपरचरणनमितभूमयो वैहायसपूर्वकाया बहुप्रकारप्रलङ्घना व्यक्तविमर्दगात्रदर्शितक्रीडाः शरभक्रीडं नाम, केचित्पिण्डितविभक्तगात्रं दर्शिनाभिनिषण्ण(?)समसंस्कारमूर्मिगतं नाम, केचिदञ्चितविधुतशिरस्कं दर्शितनाभि सुसमाहितपरि-

---

1. Shall we read खुरलिखित.

. . . .[1]चस्ताज. . . .[2]द्रुमतिगुरुखरघोषमाकाशप्रचुरयानमस्पृष्टप्रायभूतलमसमायत-दर्शितपक्षं त्वरितव्यतिकीर्णपूर्णवारितं त्रीतालं नाम, केचिल्लब्धदक्षिणपदं समञ्चि-(त)वामगात्रं गात्रविषमं समासनं विभक्तपाणिसंक्रान्तं ससौष्ठवं पञ्चपाणिरताः पञ्चवान्नाम,(?) केचिद्वेल्लितसूपविष्टोद्यतसमाहितं निक्षिप्तप्रथमगात्रं पुनःपुनर्गृहीत-पाणयः पक्षपयदर्शितस्त्वरितगामिनो(?) द्रावितं नाम, केचिदुत्पन्यस्तवदनिषण्णा-त्यञ्चिताः(?) सम्यगुच्छ्रिता वैहायसस्थिरधुरा बालस्पृष्टभूमयो भूमिशायित-मुसलवर्तनक्षमाभ्यां स्वल्पेऽप्यध्वनि सुबहु....[3]मन्तरिं नाम सहयः समादर्शयन् ।

अथ केचन धुरितमार्गपक्षप्रवर्तितमुत्क्षिप्ताञ्चिताशिरोधरं मायूरं नाम-केचन संवर्तितमधुरत्वरितगात्रं सुब ....[4], केचन समायतस्तब्धकायमतिखरमृदुत्व-रितगात्रं प्रसारितधुरितत्वरितवीक्षितं स्थितवामं नाम, (केचन) त्वरितपक्षपूर्वं विमुक्तपश्चिमम(न ? व)नतपूर्वगात्रं ....[5] नाकुलं नाम, केचन त्वरितवीक्षितमभक्षिण, पल्लवं प्रचुरपूर्वपृष्ठविकम्पिनि(?) स्पृष्टगात्रं भद्रपाश्चिमासनं वेलगात्रं नाम, केचना-ञ्चितमधुरकम्प ....[6] गन्त उपगगनं स्पृशन्त इव भुवनमतिखरखुरघोषतुलितमेघ-निस्वनं रुद्धगात्रं मुक्तवलाहकं नाम, केचन प्रचलितफलजघनरन्ध्रकटिकर्णकङ्कण-सोदरकटाक्षकेश ....[7] रश्रोणिकर्मपृष्ठमेकनालिकयार्धयोजनक्षमं सामुद्रस्वस्थपाता-नुयातपोतानुकारिणमुत्क्षुभितप्लवमार्गं नाम, समभिपत्य सादिमनोनुगामिनो जग्मुः ।

नैकलीलादर्शितवीरतरुणा भद्रवाहैश्च वाहैः कुञ्चिताकुञ्चितासनमृद्ध-संपु(?)क्षिप्ताक्षिप्ताक्षिप्राक्षुभितगात्रावरैरुपकण्ठप्रमाणेन धैनवीं गतिमनुसरद्भिर्निहं

1. A space for 5 letters is left.
2. „ 7 „
3. L. about 4 letters.
4. „ 16 „
5. L. about 36 letters.
6. „ 32 „
7. „ 3 „

च (?) नातिमनोहराणि वामदक्षिणमध्यमानि चाम्बूकृतानि पार्श्वप्लुतानि च दर्शयद्भिर्यथावकाशं यौवनोत्सेकेन किञ्चिदन्तरमतिक्रम्य पुनः श्लथखेदमपरिहरन्तः सम्मर्देन च निरुध्यमानाः शनैः शनैः प्रजग्मुः।

आधोरणाश्च प्रकीर्णेन समाहितोच्छ्रितपूर्वकायेन शृङ्गारेण च रमणीयेन पणविकारेण नीचैर्गतं स्थूलोच्चयं मध्यं च मतङ्गजान् गमयन्तो लीलयानगतमर्धनखगतं पदगतमर्धनखगतमध्यर्धपदगतं च यथावसरमु(त्प ? प)पा(त ? द)यन्तः पश्यतात्मनां सविस्मयमनाः (?) क्षणं विलम्ब्य पुनरनुसुखं प्र(त)स्थिरे।

शनैः शनैश्च जनपदाधिष्ठानजनितभूतिरविरलप्रचरितकरितुरगरथानीकशतसहस्रसंभृतोपचयो बहुक्षमोपादानतया बिभ्राणो वर्णविशेषानुद्दामदर्पभटसहस्रहेलोल्लासितासिपञ्जरमध्यपाति गृह्णन् दिशां दशानामपि चक्रवालमालम्बितच्छत्रचामरध्वजपताकः प्रमदमनादरेण सकलस्यैव राजकस्य सरभसातिक्रमणमलिनितमुखरागस्य कृपणचूडामणेः शिरसि कुर्वन्न(?)वष्टब्धसकलशैलाटवीसमुद्रद्वीपकच्छः स्वेच्छावरुद्धपिण्डितसमग्रवाहिनीप्रवाहः प्रावर्ततातिवृद्धिकलुषो नहुष इव दिवमप्याक्रमितुं पार्थिवो रजःसमूहः।

स च तुहिननिवह इव शिबिरावलाननकमलानि धूसरीचकार। तत्कमलनिहित(?)ग्रहामर्षादिवोष्मायमाणान्यर्कतेजांसि जग्रसे। तदन्तर्दाहोद्दामतृष्ण इव मदजलानि यथाकामं पपौ। दानसुरापानमत्त इव खड्गधारातलेषु चस्खाल। खड्गक्षतविह्वल इव करिकुम्भस्थलीषु मूर्च्छितः पपात। ततश्च समुद्धूतकुम्भसिन्दूरपृक्तो रससिक्त इव कर्णतालतालवृन्तवीजितः शनैः शनैरुत्पपात। उत्पत्य च व्रणपट्टिकाग्रहणहेतोरिव ध्वजदुकूलचाराण्युपससर्प। ध्वजपटपवनपराहतश्च भूयः सुकृतीव स्वरेवारुरोह रेणुसञ्चयः।

सञ्चितेन च मकरराजलोकमकुटरत्नरागच्छुरणपाटलपतङ्गमण्डलमुल्लसद्ध्वजपटानिलाकोटितामरापहंसकमंसमृणालिकावलयमिव(?) कमलिनीपलाशमनेक-

फेनहिरण्मणिहरितमम्बरतलमाचेमे । भ्रमरपुञ्जनीलेन बहुलपरागेण पटुरयभरित-सहस्रखुरखुरविकटपाण्डराः फणाभित्तयः(?) । तदा च बाडव इव धूलिजलधे-रुल्ललास क्वचिदवनिपालभूषणानामालोकप्रवाहः । कलुषरजःपराभवपिशुन-मुत्पाततारकावर्षमिव क्वचिदुत्ससृजुः । करशीकरबिन्दुजालकुञ्जरघटाघटितकर-प्रचाराश्च मन्ये तमांसीति रजांसीति क्वचिदपाहरन् परिपतन्तश्चामरेन्दवः(?) । जल....[1]नन्धूलि....[2]रमन्त कुञ्चितालोलदुकूलजिह्वाध्वजभुजङ्गमास्त्रिविष्टपाविष्टम्भ-गर्वितपातालजिगीषयेव पुनरपारे पारावारपयसि बलपरागः । ....[3]लशैलक्षोद-राशिनिकाशेन तादृशेनाहवरेणुसम्भारेणायमनावष्टब्धा नोपययुः स्थलभावं जलनिधयः । ततश्च करिकरशीकरासारवारिवेणिवाहि ....[4]यासितबलविलासिनी-कपोलघर्मजलवर्षिणा खरखलीनखणुखणायमानतुरगमुखविक्षेपविस्मृत(?)फेनला-लालवस्तबकशबलितेन वलदलिदलितमही....[5]लवासारधूमरेण कटकसंकटमिवा-पहर्तुमितस्ततः परिभ्रम्य यथाशक्ति शमितमुनिराजश्चतुरचारचारुचारभस-साटोपदलितधौतासिलतावचनप्रेरितेन पृतनामारुतेन(?) ।

प्रशान्ते च रजसि प्रचलकदलिकादुकूलचिरमृष्ट इव स्पष्टतामगादाकाश-मणिदर्पणः । चटुलतरतुरङ्गबृन्दवेगविक्षिप्तानीव दूरीबभूवुर्दिङ्मुखानि । नृपशतमकुटमकरमुखपलीननिर्गत इव रराज रत्नालोकलोहिताकवो[6] दिवसः । सागरसलिलोन्मग्ना इवादृश्यन्त रत्नदीधितिखचितचलचामरचटुलपक्षाः कुञ्जर-कुलगिरयः । करिकुलचरणसहस्रसङ्घट्टघनीकृता वज्रमयीव प्रबलेऽपि बलक्षोभे विधुरतां पुनर्नाविक्षदेव मेदिनी । निर्धौतप्रसवोल्बमिवोल्बणरजोमुक्तं निर्मली-बभूव त्रिभुवनम् । अनिषिद्धप्रचारा हरिण्य इव स्वैरमारेभिरे हि

1, 2. The two lacunae cover about 12 letters.
3. L. about 28 letters.
4. L. about 22 letters.
5. ,, 12 ,,
6. Shall we read लोहितातपो.

रेचयितुमभिनवदूर्वाश्यामलासु दिक्षु दृष्टयः। तावता च मद(ग?क)ल-मातङ्गगण्डशैलक्षरितदाननिर्झरजलप्रवाहचिक्किलदुर्गमं गव्यूतिमात्रमिव बलभ-रोपरोधादसुलभपदनिवेशस्थानमध्वानं लङ्घयित्वा विरचितनिबद्धकण्टकप-तिपरिक्षेपमतिविशालाभ्यन्तरविभक्तवलभतुरङ्गमन्दुरमौपवाह्यस्थानस्थापितविकट-पटमण्डपाग्रदूष्यसङ्घवनमिह[1] .... [2]टानां तृणकुड्यः सन्तु, गुप्तिरेवं भविष्यति। अत्र गोण्यः श्रेणीक्रियन्ताम्, अत्र फेलादवस्थाप्यताम्(?)। इह महानसमेव दीर्घः खण्डपटः कृत्स्नमेतत्परिक्षिपति तृणमदूरेच्छोदिषेयमाहरत कुमाराः पुरा परेह हरन्ति संहरताशु पानीयं भृङ्गारदृष्टि तिषु पुरा दोहान्तिकं कलुषयति(?) कोऽयं दर्पो यदन्यावासमध्येनाचकितं गम्यते। नन्वियं रत्नरचिता वृतिः किमिति भज्यते, प्रगुणोऽयं देशः, किन्तु भयानकोऽयं वल्मीकः, कच्छोऽयं सच्छायः, सरित्पुनरनियतामरगराज्यमिदं(?) गुल्ममण्डलमासन्नं तु मत्तहस्तिस्निग्धो-ऽयं न्यग्रोधः पर्यन्तास्तु नातिशुद्धाः शुद्धोऽयं नक्तमालपरिधिः। अदूरे तु सुरदसूनापणाधिक्षामूखयस्त्वमग्रप्रहितस्वर्गोऽपि न कमग्रहीः(?) अग्रहीषुर्मद्गृहीतानि स्थानानि बहूनि बलिनो राजवल्लभाः। किंकृतेऽस्य प्रथमं प्रेषितोऽसि। ननु विशदाः पर्यन्तभू(म)यः कृष्णेयं भूमिरवरवर्णार्हा, न मे ब्राह्मणस्य मङ्गल्या मळयोपपाध्यायशुक्लैव चिरमन्विष्टा(?) कथं मे क्षत्रबन्धोः पीतेयं वैश्ययोग्या भूमिः स्थानायोपकल्पिता। रक्तेव च क्षीरपक्षिणी च नात्र भूरियं तु सारिण्युत्खाते रक्तवालुका नात्यम्भोवचूषणी स्वपांसुप्रतिच्छन्नापटाप्रतिपथमपगच्छत लम्बन्ते वैव कथिकाः प्रविष्ट एव सर्वः कटकजनो मुक्तास्मत्पुरुषो वशदानतिवीरमत्र भ्राम्यतां नो नैकोऽपि कमभिगन्ता नाद्यापि दृश्यते(?) ... दुष्टदास्ये। ध्रुवं धूर्तालापैः शृङ्खलिताः कस्य वा लभ्या गतिरिह प्रबन्धसङ्कटा कण्ठदघ्नमदकर्दमा

1. One folio (B of लष्क = 34 & A लक्ष = 35) is left blank.
2. A space for 3 letters is left blank.
3. L. about 4 letters

मार्गाः, रजोन्धकारदुर्गमा तुरगपद्धतिः, बलीयान् बलीवर्दसम्मर्दो ल ....[1] तालाप-समुचितः सामन्तानिवेशभेदशंसिनीनां संज्ञादुन्दुभीनामभिनवघनघटोन्नामेदुरेण(?) तारतरशङ्खशब्दामिश्रेण शब्दमय ....[2] भवद्भवजटाभारभ्रष्टभागीरथीपातहिमाचल-विपुलगह्वरह्लादबहळो बलकोलाहलः । सादरोपग्राह्मयत्नोपर ....[3] इव प्रयाणे विक्रमसमाहितसकलक्रियाकलापो दिवसमध्यवाह्यत्वनिम्नः(?) ।

ततश्च बहलबलपरागपरिपीततेजास्तेज इवौर्वाग्नेय्या ....[4]लीभूपालशतातपत्र-मण्डलग्रस्तमुक्तसौष्ठव(क?त)या कृतसंन्यास इव प्रतस्थेऽस्तगिरिवनानि गैरिकरस-रक्ताम्बरो दिवसः । नृपशतमकुटकठोरकोटिपाटतपतङ्गपरद(?)पल्लवक्षरिता क्षतज-स्रुतिरिवालक्ष्यत लोहितायमाना सन्ध्या । सैन्यध्वजकदलिकाकशाघातमार्गजवश्या-मायमाना दिक्षु पस्नुरुस्तिमिररेखोपलक्ष्यकर्णतालाभिघातभयपलायितस्य(?) श्रम-जपुलकोद्भेद इवोल्लास तरलतरस्तारकोद्गमस्तारापथस्य । घनमपि तिमिरसङ्घातं गजघटेति मत्वा क्षणं न व्यघटन्त चक्रवाकमिथुनानि । बलरजःपुनरुद्भवभयलीन-तरणिगोपनायेव बद्धमुखानि जज्ञिरे जलजानि । कटुकटप्रकटकोलाहलोद्वेजिताना-मुल्लसद्दन्तपत्राणि श्रवणानीव स्फुटितुमारेभिरे सरसीनामालम्ना(ला?)ळिनीलालकानि कुमुदानि । प्रबलबलोत्थीया(?)पीडितभुजवनक्षुभितक्षोभो गर्भ इव निर्लुलोठ लोहितपादः प्राचीकुक्षेः क्षपाक्षरः(?) । कूटयौध इव रात्रिसत्रापाश्रयः शरवर्षेणा-विस्रब्धनिविष्टं शिबिरमाकुलीकुर्वन् बभ्राम कुसुमधन्वा । मित्रेण मकरकेतुनाभि-युक्तमभिनवकुलवधूविरहविह्वलं कामुकबलमुभयसम्पीडितमिव दर्शयता भृशम-विध्यतानुबध्य कुमुदबान्धवेन । मन्मथानीकिनीनामिवादर्शितप्रहारपा(ट)वानां रागहेतुः शुश्रुवे कळकळरवः सज्जितानां वल्लकीनाम् । वीरपानमिव कामिनीसैन्यं मधु पपौ रतिरणाय । रवेरस्तमयादनाथः श्रश्रीय(?) इव सन्ध्यातपस्फुरित-

1. L. about 20 letters.
2. " 28 "
3. L. about 30 letters.
4. " 20 "

मन्दरागाणि सुन्दरीमुखेन्दुबिम्बानि । तेजस्तोमाः कामानलमिवानलामधरपल्लवं(?) पपुः प्रवीराः । मकरध्वजदिग्विजयप्रयाणतूर्याणीव श्रोणीतटे(षा ? शि) शिञ्जिरे मञ्जुवा(चा)मञ्चितानि काञ्चीदामानि । उद्दामरागान्तरितशीतनखरप्रहारानुवेद-नमादिश्यमानदशनच्छदमच्छस्वेदबिन्दुजर्जरकपोलमवलेपविशृङ्खलाधिक्षेपवचनज-नितसंरम्भमन्तरान्तरोपनतान्योन्यक्रियाप्रशंसमंसनकन्तळ( ? )करताडितोरस्तटं कृतप्रतिकृतप्रतिग्रहापसारसङ्कुलमालोहितकुटिलदृष्टिलक्षितपरस्परावस्था(न)मास्था-करमनेकदुष्करकरणयोन( ? )मक्षताभिमानानां यूनां प्रावर्तत क्रीडारूपद्वन्द्व-युद्धम् ।

अनेनैव च क्रमेण परिणामं जगाम यामिनी । ततश्च सुरतक्लान्तक-मिन्दुद्वन्द्वमन्दमन्दसंवाहीनो(?) वन्दिवृन्दमङ्गलगीतिग्राहिणस्तदनु तुहिनकणासार-धूसरितहरिसटा(गा?भा)रधूननोद्धूतरंहसो हंसमिथुनकान्तिपीतकमलमधुमदाबद्धां रोहनिद्राहठापहारनिर्दयाः(?)शय्योत्थितमत्तमातङ्गचरणरणरणायमानशृङ्खलारवा-कर्षिणः कर्षितः(?) इव कटकमारेभिरे चरितुं प्राभातिका मातरिश्वानः ।

नरनाथस्तु हृदयहारिण्या रमण्या समरचिन्तयैवातिनीय रजनीमहनि जायमाने छनित(?)सैन्यसन्नाहः समुत्थितो दिनकर इवातिसृज्य कपिलान-सहस्रमुस्रणाः( ? ) प्रत्यङ्मुखः प्रतस्थे । कतिपयप्रयाणाकान्तावस्थितस्य तु पार्थिवस्य कश्चिच्छत्रुकटकादागत्य रहसि विज्ञापयामास । दे(व) दैवत-प्रभावदृप्तो देवस्य जयाया(ग)त एव राजा मालवानामितस्त्रियोजनमन्तरं वर्तते । तस्य किलानुकूलानि भो(दा ? गा)नि दि ....[1] तदाहवेषु देवेन पुरा विजित्य स्वचरणनखचन्द्रिकाकलिततोष्णीषमुष्णश्वासशोषिताधरपुटकृच्छ्रनिश्वारि-तालोकशब्दं च क ....[2] सन्नतमतिहृष्टं च वर्तते । पौरस्त्यास्तु राजानः प्रभञ्जना इव

1. L. about 18 letters
2. 2?

पार्ज्जन(?)सुरभयो घनसमयं भवन्तमनुवर्तन्ते । सार[1]....व कुलिशम् । ईशोऽसि (क ? ख)लु कर्तुमन्तमन्तकस्यापि । (कुतः?) कुरु गोग्रहणोद्यतस्य सर्वक्षत्रस्यानुत्तरं कदनम् । एवं सति विजयोऽपि जितो[2]....विसृज्य सदसि दत्तास्थानः समस्तसामन्त-सन्निधौ सधीरमिदमुवाच — पुरा किल मनुमादिराजमानाथ्य दीनाः पालना(स ? य) प्रजा भेजिरे । तेन गुप्ता निर्वृत्य मात्स्यन्यायेन त्रिवर्गं निर्विविशुः(?) । ततः प्रभृत्यु-द्बभूव स्वभुजापाश्रयः शस्त्रबन्धुः पृथ्वीकलत्रः कीर्तिसारः समरमृत्युप्रतीक्षः क्षत्र-मित्युदीर्णपुण्यशब्दो वर्णः । स च सुवर्ण(तयेव ? मिव) यथा (यथा) तप्यते तथा तथोत्कर्षेण दीप्यते । तस्य चासावप्राप्तस्थानीयो योऽप्राप्तः समरशौण्ड(का ? ता)म् । इह खल्वप्रतिभः कविः, अप्रगल्भो विवदिषुः, अ(ति ? नि)रूपको व्याचिख्यासुः, अचिकित्सुर्भिषग् , अतितिक्षुरविविक्तो विजा[3]....रिरनुद्युक्तो वणिग् , अनृतवाग-मात्यो, नाथर्वा पुरोहितोऽसमञ्जसः करणस्थोरुपचारज्ञः कालो(?)ऽर(म्य ? म्य) शीला युवतिरपीयतोप्यन्यो(?) नायको ज्ञातिरकण्ठो गायनोऽकृताङ्गो नर्तकोऽक्लेश-क्षमः क्षपणोऽकरुणः शाक्यमुनिरनपत्रपः कुलपुत्रोऽनुपकर्तृ मित्रमविक्रान्तश्च पार्थिव इत्यकिञ्चित्करो वर्गः । प्राप्तश्चायमवसरः पराक्रमस्य । प्रत्यासन्नो हि रिपु-रुपसमाहृतबलसमुदयः । तदिह महत्याहवक्रतौ क्रमसमिद्धसंघर्षहुताशने हुतशरी-राहुतयः पुरुहूतविषयमारुरुक्षवो यथासुखमृजुनानेन वर्त्मनाधिरोहन्तु । यस्यैवं प्रयोजने न बुद्धिः, प्रियं(चा ? वा)जीवित(व्य ? )म् , ऋणं वा(न ? नि)स्तरणीयम्, [4]अरपत्रना(?) वा सन्ततिरपरिपूर्णा वा मनोरथाः, अतृप्तं वा चित्तमचिराहृते कळत्रे, यो वा पित्रोरे(क)पुत्रः, यस्मिन् वाप्यसौ विपर्यते(?) गुरु कुटुम्बं,

1. L. about 26 letters.
2. „ 16 „
3. A space for 2 letters is left blank.
4. We may read अनुत्पन्ना.

यस्य वा तपसि श्रद्धा, यो वा लोकानमूनुपायान्तरेण जिगीषति स इतः प्रति(नि)वर्तताम्, इत्येवमेव घोषणां व्यादिदेश।

तथा च पत्यौ कृतवचसि मर्यादोप(सि? स्)ष्टस्तप्तहेमावदातो वृत्तलम्बबाहुः पृथुलोरःस्थलो घृष्टप्रांशुर्गुरुराजः सिंहवर्मा नाम राजकस्य हृदयमुद्धर्पयन्नुद्धुरध्वनिधारा(धरा?)वधीरित(धीर? धाराधर)ध्वानिर्बद्धभ्रुकुटिरभ्यधत्त— सत्यमिदं यदाह देवः क्षत्रं नाम विक्रान्तमतितरं निष्प्रयोजनं तिलं हि मानुष्यमानशून्यः पुरुषो न च मान(?) परावलेपानुपेक्षते। स च वराकः श्रियमभिमुखागतां भ्रंशयति, शरज्ज्योत्स्नामन्तरयति, अमृतकुल्यामुल्लङ्घयति, मलयमारुतं व्यवदधाति, पारिजातपरिमलप्रसङ्गे नासापुटं पिदधाति, वसन्तोपवनप्रवेशे चक्षुः संमीलयति, चन्दनचर्चोपातने कञ्चुकं परिधत्ते, यो मनो(म?)रथशतप्रार्थितोपस्थितं रणमहोत्सवमननुभूय प्रतिनिवर्तते। कस्तादृशः खलु पुरुषः कुत्सितः। न तथैते भूपतयः। जातिप्रतिबद्धमेषां हरीणामिव भिन्नमदवारणं शौर्यम्। नैसर्गिकमभ्राणामिव सर्वाशोपरोधि गर्जितम्। औत्पत्तिकमाशीविषाणामिवान्यदुःसहं महाप्रतापानिमनम्(?)। स्वाभाविकं कल्पान्तनभ(व?)स्वताम् (इव) क्षितिभृत्कुलचूर्णनक्षमं बलम्। आत्माधीनमुदधीनामिवोदारवारिग्रासघस्मरं तेजः। तथा चैषां भ्रूभङ्गो न शत्रुभङ्गं व्यभिचरति। वनाधरस्फुरणमरिवधूदक्षिणेक्षणस्फुरणं न ललाटस्वेदोद्गतिः प्रतिजडं जीवितोद्गतिर्निरसंरम्भदृष्टिर्दीप्तिर्न च मौलिकम्पो विपक्ष ....[1] टीं भ्रुकुटिरारोहत्यत्र करोति कोकिलकालरात्रिविधूर्दर्वाङ्कुरमकर इव विक्रमरसकादुद्यते कपोलस्थलीषु रोमोद्गमोऽत्र क्रीडति लब्ध्वा ....[2] खराणि लोहितायन्त्यो गर्वदृष्टयोऽत्र चासौ रचयन्ति चरणरागं लक्ष्मीशबरी(?)। न चैते

1. L. about 16 letters.
2. ,, 28 ,,

बाणासनेष्विव रत्नासनेषु निष ....[1]व राज्यफलेषु भूरिस्पृहाः । न खड्गधारातोये-
ष्वि(ह?)व भृङ्गारधारातोयेषु पिपासवः । न लोहितचर्चापातनेष्विव कुङ्कुमचर्चा
....[2] नोदश्रवणेषु पर्युत्सुकाः । न मृत्युदर्शन इव मृत्युदर्शनबद्धरागाः(?)। न
व्रणपट्टबन्धेष्विव सामन्तपट्टबन्धेष्वभिमानिनः । न कदलिकावनेष्विव प्रमद-
वनेषु....[3]श्रमै....[4]णो न श(री?)रतल्पेष्विव शेरतेऽङ्क तल्पेषु सुखस्वप्नकाः सुज-
नोमानकेसरिवांसपञ्जर(?)जरासन्धवृकोदरानुसारिणो धरापतयः । स तु त्वदा-
देशे नास्त्यमीषां दुष्करं नाम। शीधुनिवासरक्तोत्पलानुदधीनप्युदौर्वहुतभुजः(?)
सतृष्णमापिबेयुः । लता इव सकुसुमा दिशोऽपि स्फुरितग्रहतारकाः सलील-
मावर्जयेयुः । चक्रमिव हृदयमुदयरक्तं पतङ्ग(म)ङ्गुल्या भ्रामयेयुः । पुण्डरीक-
मिव समृणालं सितमयूखं मृगाङ्कमुत्तंसकं रचयेयुः । महीसमुद्धरणमपि
महावराहभुक्तोज्झितमिति नाद्रियन्ते । कुलगिरिसमुत्सारणमपि चान्येन
धनुर्बलोच्छिष्टमिति न बहुमन्यन्ते । सकलभुवनभस्मीकरणमपि कल्पानल-
प्रहतमिति सुकुरुपक्षे(?) स्थापयन्ति । का पुनरेषां पुरुषसिंहानामत्सल-
रिकुलग्रहणे(?) गणना । यत्तु निवृत्तिकारणत्वेनोपन्यस्तं देवेन, तत्रैताश्चिन्त्यम् ।
समर(ण?)मरणे संशयितः स्वर्ग इति, शास्त्रस्यातिशङ्कायां यागादिष्वपि
तत् समानम् । प्रियं जीवितमिति, तत्पूर्वमेव स्वत्वङ्कुकृतैः(?) कृतम् । ऋणं
निस्तर(म?)णीयमिति, बलवद् भर्तृपिण्डस्यानृण्यम् । अनुत्पन्ना सन्ततिरिति,
सुलभैव स्थास्नुरत्र रिक्ता सन्ततिः(?)। अपूर्णाः कामा इति, नैतत्त्वय्यवनि-
कल्पतरौ । न तृप्ता दारे (ष्वी? ष्वि)ति, रणत्यागान्निवृत्तपुंस्त्वस्य किं दारैः ।
पित्रोरेकपुत्र इति, तेन पितरौ जीवपुत्रौ यः सोष्मा । कुटुम्बम(हा?ना)थमिति
कः सचेता बाह्यस्य कृते स्वमात्मानमुपहन्ति । तपश्चरामीति, तच्चिर-

1. L. about 30 letters.
2. „ 20 „
3. L. about 1 letter.
4. „ 1 „

क्लेशं कृशफलं च। शक्यमुपायान्तरेणापि परो लोको जेतुमिति, कोऽसौ जयप्रकारो यो नागूकर्णननिशितनिस्त्रिंशमनाधानमनाकृष्टविकटचापचक्रं प्रेरितप्रासर्पणकणयशक्तितोमरमनु(?) म्रियते! तदे(हि ? भि)राप्लावय प्रळयकालइव महावलाहकैरुन्मत्तगर्जिताशनिभिरुच्चक्रापचक्रकोटिभिः ककुभां चक्रवालम्। अद्य श्वो वा भवतु भयङ्करमरिनरपतिकुलशिख(रो ? र)मकुटभारभरितभूतलमुद्भिन्नविपुलविद्रुमलतावितानच्छन्नम(द्या ? ध्या)भोगमेकोदभूतमिव चतुरम्भोराशिवलयमित्युपरराम। इतरेऽपि तरस्विनो यथायथं राजलक्ष्मीलीलासङ्गीतमृदङ्गघोषगम्भीरमभिरयोरजव(?)जनितजगज्ज्वरं जगर्जुः।

त(को ? थो)परतेषु घनगर्जितेषु, प्रशान्तेषु पुरःश्वसनेषु, गलितेन्द्रगोपतरलरागासु प्रसन्नासु गण्डस्थलीषु शुचिमुखकमलविलासलक्ष्मीनूपुरखानुकारिणा स्वरेण बलाधिकृते निधाय चक्षुर्व्याजहार राजहंसः—कच्चिद्विचिता समरभूमिरिति। स तु प्रणम्य व्यज्ञापयत्—देव! विचितैवेयम् इतो गोरुतमात्रामिवातिक्रम्य समासारवत्यभिमतरसवर्णगन्धसंस्थानानुद्धातिन्यभङ्गुरा भयरथानमाखुचत्र(?)ग्राहिण्यस्थाणुश्वभ्रकर्दमा समाहृतस्यापि सर्वजगत्प्राणिसमुदयस्य स्वैरपरिवर्तनक्षमा या ....[1] युद्धायेव बुद्धिपूर्वमिव निर्मिता भूमिरिति।

अथ महीपतिः कस्यचिद्वचोहरस्य मुखे वयमिदानीं (भवत्?) भवत्प्रार्थि(ना ? ता)नामप्रहता अरण्येऽस्मिन्नाभोगवति स...[2] त इति मालवेश्वरायसन्दिश्य श्वः प्रकृष्टं हस्त्यश्वं दर्शयेत्यादिश्य बलाधिकृतं कृतसदोविसर्जनो विवेशान्तःपुरम्। अनुष्ठितदिव ....[3] सरे वासरकमले वरुणादिग्वधूमुखारुणाधरलेखां

1. L. about 6 letters.
2. ,, 16 ,,
3. ,, 25 ,,

भ(ग)वतीमुपास्य सन्ध्यामुद्दामतमसि मन्नतेजसि सङ्कुपितनभसि(?) विकासिकाभि
[1]
.... घसि नीडनिलीनपतत्रिणि दत्तकौशिकमुदि कुमुदभासिनि तनुमरुति रतिवरप्रजातनैशज्योतिषि प्रदोषसमये कृतयथोचितकृत्यः शया[2]..... यामेति यमायितुमुदयमाने तिमिरमरुणतेजसि, तरुकिसलयमासिनि कुसुमलवप्रभासिनि(?) प्रालेयकणमुचि मृदु चरति प्रभातमारुते, रुतमुखरमुखे दिशो दश प्रयातुमुद्धूयोद्धूय सज्जयति पत्राणि पत्ररथमण्डले, स्मयमानासु कमलिनीषु, मन्दायमाने कुमुदवने, वन्दिमङ्गलगीतिभिः प्रतिबुद्धो दिनमुखोचितमवसाय्य नियमविधिमनुष्ठितप्रतिकर्मा निर्गत्य विविधसारदारुघटितनियोगमुपरि रचितश्लक्ष्णमृत्तिकातलमुपहारकुसुमपुञ्जकञ्चुकितं मञ्चमारुह्य सापाश्रयपरिस्तोमोपविष्टो निष्टप्तकनकदण्डविकटमायूरातपत्रमण्डलनिवारितातपः कतिपयाप्तसामन्तपरिवृतो वारविलासिनीभुजलतोद्धूयमानचामरपवननर्त्यमानकुटिलकुन्तलाग्रः स्वर्गे इव सुरेश्वरो नरेश्वरः सुखमवातिष्ठत । यस्य स्वतेजसा देदीप्यमानस्य प्रतिबिम्बमिवाम्बरसमुद्रसंक्रान्तं बाला (र्थ ? र्क) बिम्बमालक्ष्यते ।

ततः क्षणात् पुरः प्रवृत्तपत्तिकलकलापिजलझङ्कार(?)घोरचण्डरवोन्नीयमानागमनो वैनतेय इव स्वर्गवार्तात्रासविद्रुताशेषनागलोकश्च स्वप्रभू भुन(?) भुजकम्पनैर्भञ्जनभयविह्वलैरिवासन्नानोकहैरनुमीयमानबहलबलकर्षो बहलसिन्दूररागसन्ध्योपात्तमस्तकोऽस्तशैलबल(?)सकलतेजस्विराजमण्डलास्तमयाय स्थिरनिबद्धैः पादैरुपस्थितः स्फुटप्रहारयोग्यदीर्घपीनकराङ्गुलिकलितचारु(सु ? पु)ष्करः प्रमाणयुक्तमधुरवंशपणवको रमणी(य)श्रवणतालशब्द उन्मत्तमधुपकामिनीगीतनादशोभिशुभवितानविशेषकान्तिदर्शितशृङ्गारलोको जङ्गम इव सङ्गीतमण्डपश्चित्र(प)दन्यासविभ्रमाया राजलक्ष्म्याः, नैसर्गिकवैरसंभवमृदितमृगपतिसित(पट्टा ? सटा)तन्तुसन्ता-

1. L. about 32 letters.
2r „ 16 „

(न)संवेष्टितयोरिव रश्मिजालजटिलयोरीषादण्डकान्तजोरुत्सङ्गनिषण्णलक्ष्मीविष्टर-कमलदुक्तमधुधारासिकयोरिवातिस्निग्धयोरालोकसरसि कटकटलङ्घनीकर्णतालमरुतरङ्गितेषु मुहुर्मुहुः पिपासयेव लोहाञ्चितं(?) गमनमुल्लासयन् मधुमणिचषकयुगळमिव मदवृद्धये केनाप्यभिमुखावस्थापितमापिङ्गलं लोचनयुगळं दधानः प्रतिकुञ्जर-प्रतापानलपानादिव लोहितोष्ठतालुजिह्वो मुहुर्मुहुर्जयेषु दि(क्ष्य ? कृच )कभ्र-मारूढतया उल्लिखितमिव रूपदेहमुद्वहन् वंसक्रियार्थिवालम्बिनीं बालपल्लवमञ्जरीं भर्तृभक्त्या स्पर्शयन् महीं विग्रहः कुटकेन सह(?) भ्रमन्नन्तरान्तरा समाघ्रायान्यां गजपदवीमगणिताधोरणमसूयया साचीकृत्य (म ? प)दं तत्र चिकुरिताक्षं मुखमीष-(ति ? दि)व सित्वा(?) पुनरपि स्वेच्छया प्रतिष्ठमानः, श्रीपर्वत इवेश्वरसम्भावितः, कैलास इव राजतात्मा, (म)न्दर इव सुवर्णशृङ्गो, मैनाक इव स्वपक्षरक्षाक्षमो, मलय इव दक्षिणोद्यतः, सह्य इवापरान्तयोगी, विन्ध्य इव शिरस्तटानुमेय-कुम्भसम्भवगौरवः, पवनज(न्म इ ? न्मे)वोपादानक्षमो, हिमशैल इवोदग्रकान्तैक-प्रकृतिः, उदय पर्व(त) इव पुरस्तादुच्छ्रितः, सर्वभूधरसमा(न)सारश्चर इवापरः पर्वतेन्द्रो निर्मितः प्रजापतिना, अद्य दुर्निवारोऽपि स्ववग्रहः, कामवानप्यनङ्गहीनः साक्षिकूटोऽपि साधुवृत्तकरः कपोललम्बिषट्चरणोऽप्यविषय ....[1] षापि स्वभावभवो लिम्पन्निव तेजसा तं प्रदेशमाससाद द्विरदेन्द्रो हेमकूटः ।

स्फुरितपक्षं पक्षराजयो राजकाननकमलकानन(?) ....[2] तं च नन्दनमिवा-निमिषप्रेक्ष्यं प्रेक्षमाणः क्षोणीपतिः परं परबलदुर्जयमेवाजीगणत् । सारनैतृ-सान्त्वलालितश्च कानि कान्यप्यमृतमयानीवा....[3]नः तेन पाति चीयमाणं(?) पृथ्वीपतिमनुवर्तमानः प्राप्तरूपं वचनमित्थं व्याजहार प्राञ्जलिर्बलाधिकृतः—

1. L. about 10 letters
2. ,, 22 ,,
3. ,, 18 ,,

पश्य देव! दिवि दिवाकरजिघृक्षयेव कुलिश ....[1] व्याददाति नागराजो मुखम्। अस्य चासौ सलिलपर्यस्तकदाम(?)वक्रच्छदस्थायामवान् विक्रमसमयजृम्भमाण-नारायणचरणानुकारी सुरसिन्धुधवलशीकराभिषिक्तः सर्वानेव दानवान् भीषयते जनं (?)जयध्वजायमानो हस्तदण्डः। कोमलकालु(?)रागवर्षिणी च पद्मराग-मणिगुहेव हेमकूटस्य दृश्यते मुखमहादरी। (ना?न)र्दनोऽयं बृहदुरोमणिमेद-गुणदुर्धरेण गुरुणा बलेन (गु?यु)क्तो गुप्तमण्डलः खरतुरगशकटनागमर्दनो महाघोषमातिष्ठति। कामीवायं कान्ता(र?)पीनस्तनान्तर्यव्यस्तो गुणैर्न रञ्जयति पार्श्वयोरिवायमुभयपक्षवर्तिनोर्मैनाकवैरतेययोरपि लब्धसाम्यसोयमंस इव प्रतापेऽप्युपचितस्कन्ध इव स्थिरतरे यशस्यपि प्रथीयानस्यचेतुमिन्द्रा-शनिपातघोरस्तनयित्नुक्रियासहस्य वलाहकस्येव मूर्तिरुल्लसदविरलबिन्दुजालका-स्वायतव्यायतायतच्छविरकृशमृजु सुवृत्तं चास्य गात्रं परं सत्कलत्रमिव गुरुतरमपि भारं लघुवदुद्वहति(?)। शरदम्भ इवानाविलं, देवयानीयौवन-मिव कचविवर्जितं, मणितलमिव वानुपदिग्धश्लक्ष्णं विलहन्तप्रोहपङ्क्ति(?)-पादमस्य लक्ष्यते। स्नेहमार्दवोपपन्नमपि शिलीमुखा(बा?पा)तदारुणं द्वित्वसंख्या-वच्छिन्नमप्यनन्तभेदमन्योन्यसमं दिग्वधूचुम्बिकर्णपल्लवयुगलमपि खुरविपुलपल-क्षिप्तान्तरस्निग्धचरणरुहापदेशादित्यभीत्या स्वपादाश्रितं विंशकरिकृत्वे वैषपत्ते चन्द्रमन्याङ्गनिराकृतस्याकरुयेव काश्यस्यावकाशं ददात्यसोदरमतिकठोराहङ्कार-निर्वासिता भयेन सूक्ष्मीभूय स्निग्धरोमच्छदादेकैकनिर्गता इव मृदुवर्तयः(?)। स चायं भयस्थानेष्वभीरुस्तेजसां निधिरित्यर्थवेदी वश्यक्रोधः शूरो मेधावी शीलवानकर्कशो युद्धरतिरसन्तापी क्षितिमिवावतीर्णस्त्वत्प्रभावादैरावतो वारणपतिः। अप्येवास्य दिक्कुञ्जरकुलप्रातिपक्षं क्षपयेदयं, अपि नमुदयकूटं(?) शत्रुहस्तनामिति।

अथ तस्मिन्नरदेवेन स्वहस्तोपहृतपुण्ड्रेक्षुकाण्डसम्भाविते प्रयाते पुनरपरेऽपि करिपतयः क्रमेणोपतस्थुः। केचिदलिकुलकलितदानपट्टिकाश्यामगण्डदेशाः,

1. L about 8 letters.

तरुणतमालपल्लवस्वस्तरुस्तीर्णमणिशिलापट्टिका इव रणरतिक्षमाः कीपलाः(?) केचिदनि ....[1] कीभूतमापिदाहो सुयमान(?)पाटलमुखपटांशुकाः स्फुरिताशनि-पल्लवा इव लोकसंहरणदारुणाः प्रलयकालजलधराः, केचिदालम्बितमहावराह-लीला इव भुवमवाङ्मुखं नित्यदशनकोट्या दारयन्तः, केचिदाहूयमाना इव हरीनाकुलीकृतमहामहीभृत्कटकमभि(ग)र्जन्तः, केचिदाय(त)हस्तपादसंवेष्टमान-जनप(टां?दाः) कालदूता इव परिभ्रमन्तः, केचिदुपायनभूतप्रविष्टलोकालाभां(?) दुःखाद्दीर्घशूत्कारानिभेन निष्प्रयोजनं जवमिवोद्गिरन्तः, केचिदलसानेकपरुष-बाहुपरिघभञ्जनसरभसा दशनभङ्गशङ्कया निर्याणभागिनीपाक(?)निष्ठुराङ्कुशकेलि-भिरवनतपूर्वकायैः सभयासमाधोरणैर्निवार्यमाणाः, केचिदभिहतभागीरथीतीर-भित्तिभागोद्धूतधूलिपटलम(ल?ग्र)मूर्तयः क्रोधानलधूमधूम्रा इवो ....[2] मसदत्त-विस्तीर्णमस्तकाघातपात्यमानचैत्यानोकहाः प्रतिकुञ्जरसन्निपातयोग्यमिवाचरंतः स(क?)शंखाः सघण्टापुटाः सडिण्डिमाः सहेम ....[3] या इव लावण्यमया इव रागमया इवाहङ्कारमया इवावष्टम्भमया इव भद्रप्राया मन्दमदवर्मान्वया दुर्मृग-स्वभावाः कीर्तिमहौषधिहिम ....[4] पि क्षितिपालं नयनहारि चक्रश्चक्रवालमिव दिशामात्मोत्सेधेन संक्षिपन्तो मातङ्गपतयः

तांश्च दर्शयन् बलाध्यक्षः क्षितिपतिप ....[5] वनप्रजाताः प्रकामावगाढं भीरदी ....[6] दारिकांभसङ्कुलेतरकालतोययायिनः कौशिकीतीरकशकाशवन-विलोचनाः कालमहीविहारिणः कम्रमा ....[7] विनतलौहित्यतीरागरुतयरुत्वचः(?)

1. A space for 4 letters is left blank.
2. L. about 12 letters.
3. ,, 20 ,,
4. L. about 32 letters.
5. ,, 20 ,,
6. A space for 4 letters is left blank.
7. L. about 5 letters.

कम्बुकसरसरागाः सरभसवप्रक्रीडयोद्धूतसैकतविसरधूसरितपूर्वसागराः विधुरितवारिपत्ररथस्था(?) जलस्थलास्फालव्यसनिनः कपिकापिलकपिमतिततटोत्सङ्गप्रतिशृङ्गभङ्गसङ्गिनः(?) पङ्कज(षे?)कुमुदषण्डोपगूहगोमतीजलातिवाहितनिदाघमध्यन्दिनाः दिनविदाहद्रावितहिमशिलासौघपूरशिशिरभागीरथीपरायणा रदनखण्डितबान्धवाद्रिसानवो नवघनभारचारुवैवाहितभूभृत्प्राग्भागचरा गुणितचरणलङ्घिततुङ्गशृङ्गोत्सङ्गधूत(या ? धा)तुधूलिस्थगितगोरथगिरयः कालिदकाकालकीटकाशिकोमलकिरातपुण्ड्रमल्लमलदमगधाङ्गवङ्गपर्यन्तगोचरा वनह(?)स्वभावादनतिबहुल(दाना ?)दानवेगा मनागवाग्रा रभसोन्नादिनो नातिप्रशस्तपार्ष्णिनखदन्तोत्सङ्गोदरशिखरोच्चीक्य(?)श्रवणा मनीहन्तरबृहद्द्रुमन्तो(?) (महा ?)महावंशाः पृथुहस्ताः पेचकिनो व्यायामविलुप्तशैथिल्यदोषा विजयकर्मजनितशौर्याश्च तद्वनजमतङ्गजोत्तमाः समाहृताः ।

एते चेदिकरूशकाननोद्भवा रेवाशोणप्रसवसेविनः पूर्वापरसमुद्रवेलाविहारिणः कोलाहलकटकबन्धयुद्धकोलाहला रदनोल्लिखितमाल्यगिरिशिखरभूमयो गन्धक्षणभग्नधुण्डुशैलषण्डद्रुमा मदविकटमयूरनृत्ताचार्यमन्द्रगर्जिता निर्झरजलशीकराङ्कितनितम्बशैवालजातशीतशैवालशैलसामवनपीपित(?)घर्मतापाः प्रियनागप्रियप्रस्थकराश्चैतिदिहपर्वतदेशानन्दिनकशिकश्यमूकवनसंमृद्धयो(?) भ(ङ्ग ? ग्न)भागीरथीतटास्तंसामूलपनसभञ्जनास्तमसातामरसविसरसास्वादलम्पटाः प्रम्लगातीरवनमृगातकवाहिनो (?) लाजगौरबीजैकरवकबललालिता लसदौदुम्बरीकटोदुम्बरकदम्बकम्पनाः पम्पापानदोहलिनो मुक्ताभङ्गशुभ्रशुक्तिमतीजलविहारा मुक्तसक्तयः कालश्यामप्रियायाः(?) क्षौद्रवर्णदन्तास्तूर्णगामिनस्तुङ्गाननाश्चण्डाश्चारुचरणा नात्यायताश्च नागवराः ।

त इमे दाशार्णकारण्ययोनयः सूनव इव यमुनायाः समा(व ?)नवर्णाः, भर्तार इव वेत्रवत्यास्तद्भोगावितृष्णाः सुहृद इव सुकरच्छाया(?)

स्वरसावर्जिताः, भृत्या इव चित्रमाल्यवन्या नित्यासेवनाभियुक्ताः, वैणा इव वेणुवत्या वेणुशब्दाभिसारिणः, वत्सभूमिवत्सलाः स्थूलवक्रहस्ताः सूक्ष्मविरलबिन्दवो विपुलशिरःशिरोधराः विशालोत्सङ्गदन्ताः दीर्घपुष्कराङ्गुलयो दृढप्रहारशीला मधुपिङ्गलनयना मदगण्डवारिजातामोदाः(?) प्रकामवृद्धपश्चार्धाः प्रायण्याम(?)पद्मवर्णा मत्तकरिणः ।

(ए)ते युध्यमानत्रिदशासुरगात्रभङ्गभग्नशिखरिमण्डलखचितभूमौ तदसृक्सहपतितसत्त्वसारा तन्वयदि ...[1] वर्धनद्रुमलतातृणोद्गमगत्याङ्करेयके(?) वने समुत्पन्ना नालिकातीरकर्णिकारनागवृक्षप्लक्षप्रवालकुलकबळभक्षिणो विशालरूपशल्मलीशल्म ....[2] सिन्धुरोधोधवलधन्वमधूकन्यग्रोधगृध्रवः परातीरातिबुकतिनि(?) एकमदमोदकीर्सारितापरुषशिरीषाश्वत्थश्वेतव ....[3] वलाम्रबहुकान्तनुवृन्दारकेक्षुपालिकाकाण्डेषु शृङ्गाटकरसनालनालिकानलनैतालनलपोतिकरताः सिक ...[4] नकटमनु ....[5] कामुक्ताः कुञ्जाकुञ्जगर्भव्रीहिशालूकलोपतः कवलितोहाकच्छपाषाणभेदिकादलितकाकण्डुपतिकाग्रहनाग्रहस्तहस्तिश्यामाकारा (?)....[6] ध्वस्तजम्बुवनाश्छिन्नशीर्णश्रेष्ठवतीतटश्लेष्मातकद्रुमा मथितल(ल ? न)वसुमतीतीरवानीरवञ्जुला दन्तदत्तसूप्रावर्प्रंवातरीयतय(?) .......[7] नीरोधसङ्करभतारभवोमुयइतमालामलोन्मूलिनः(?) पिञ्छासैकतकरभञ्जनाः कान्तावन्तिकामाः अमानन्दालोलसामन्दनन्दथयो(?) व्याम्रीनवोग्राम्रा ....[8] णश्शुल्कपिकल्लोलल्लीलोल्लसिनः शतभागाभोगभाजः भुञ्जारोधोरजःप्रियातसपरापालिलब्धस्वैरसुखयः स्वैरश्विकपारियात्रकम्बकासु सूपकूटपर्वतपातप्रष्ठवैषभूर्यवासन्तपुष्पगिरिसितगिरिणाग्रश्रवन्तश्च(?)

1. L. about 4 letters.
2. „ „ 25 „
3. „ „ 28 „
4, 5. „ „ 24 „
6. L. about 24 letters.
7. „ „ 7
8. „ „ 1

कक्षेष्वक्षयस्य भोगस्यास्मदुपारैर्विसितानि रूपदेहमृतत्वचः कलालापिलक्षयभागां स्वक्षायुद्धाध्वभारदक्षिणा(?) प्रमाणबलशरीरसत्त्वसम्पन्ना लोहितोष्ठतालुजिह्वा महावराहकरिप्रायाः शीघ्रदीर्घक्रमाधेनुकानभीका स्निग्धरोमाणोन्नताघन्यभोग्या तु(?) गन्धकरिणः।

त इमे कालिङ्गवनजन्मानः कलिङ्गोत्कलमहिषकान्धकच्छककुडुम्बपुन्नाधप्राङ्कणकेरलचोलपाण्ड्यान्तरपाण्ड्य(?)पर्यन्तचारि(ण)स्तैलामिक्षुमतीं लङ्कां वैतरणीं महोषामषवतीं नक्रनवां शुष्कनदीं श्वसेनां वेणां कृष्णवेणां सुप्रयोगां गोदावरीं चूर्णीं सूकरिकां सन्नीरां प्रवेणीं वैस्यां ताम्रपर्णीं कुञ्जां कुमारीं दक्षिणोदधिमगस्त्यतीर्थं मानसं सरः(?) सूक्ष्मरोमोच्छ्वासाः सुप्रतिष्ठितशिरसो परा जघनावरा महाशरीरोपस्कावष्ठवन्तः(?) कलाविङ्कनयना नीचैर्वृत्तसुस्थितचरणनखमृद्वायतहस्तदण्डा दीर्घकेशवा(लमा?ला) दीर्घाध्वक्षमाः श्लिक्ष(?) क्षुत्पिपासासहिष्णवो जहाः(?) संहता बलिनोऽन्वर्थवेदिनः स्कन्ददरा(?)रताम्रतालुजिह्वोष्ठा म(सु?धु)सन्निभविषाणा धनुःसवर्णसुवंशाः पीनायतपृथु(च?ल)ग्रीवाः स्वल्पनिष्कोशाः सुपेचकाः क्रियास्वल्पदोषा निष्परिहाणयः पद्मप्रायाः परबलावमर्दिनः प्रकृत्युदग्राः प्रेक्षणी(य)विग्रहाश्च वारणपतयः।

तेऽमी पुनरपरान्तकवनभुवः प्रेहरामुररयो (भो?गो)दावरीदारुवर्णयोर्बाणामूणयोर्निराभैमरथ्योः परामधुक्रन्दयोर्दमनतापिनैतम्बयोः कारिरिलाङ्गलघातकयोरन्यासु च महानदीषु लब्धरतयः मन्दरकुमुदकृष्णगिरिसह्यतुङ्गवरमत्यमर्थं(?) पर्वतानां प्रस्थाटविकप्रतिबद्धेषु जाङ्गलोद्देशेषु घृतमधुलाजतैलपूर्वापणिकाश्चारं चारं जातदर्पाः चक्राटकेषु वालिकेषु दर्भषूमाभासिणा मर्कटकमुत(?)यवगोधूमश्यामाकप्रियङ्गुव्रताधिकबलितोत्कालानलपलाशिकाकंदलीवीरणमरुचेलवोत्सर्णवाके पार्ष्णिकाकला च दुष्टवानीकाशत्रपुत्रग्रास(?) शतपर्वाचार्विणो पित्रा श्रीराः समप्रतिष्ठिताः(?) स्थिरोदग्रदीर्घोष्ठबालपीनन्द-

....तामहोत्सङ्कमृक्कसमत्वचः(?) कमलगन्धिप्रभेदा ह्रस्वग्रीवाः पराश्चापवरचारु-वंशाः श्यामद्दषापद्धः(?) शूरमानिनः सुनयनाः स्ववनरान्निगश्च .... व्रतः(?) सरस्वत्यन्तर्धानोद्देशं चाश्रिताः सरस्वतीं कशेरुमतीं न्यङ्कुमतीं नीलगुहां वृत्रघ्नीं पार्ष्णिमतीं पूरिमह .... रेवतकं दाशार्णमाणिचरं कोञ्जमर्बुदमूर्जयन्तः अन्याश्च मरुभिरनिविष्टपतस्यभावां तनुरोमचरणनखश्रवणत्वचस्तनुस्थिपरुष(?)....पि दुष्प-राजयाः सुविभक्ताः (स्वङ्गे? सुपे)चकाश्चण्डा मृद(धो? वो) मध्यमायामाः शिक्षा-विपत्तिकारिणः कर्मनिष्पत्तिशोभिनः प्रायेणातिदीर्घायुषो मृ....ञ्जनदारण्यसञ्चारिणो रम्यह्रदामिरावतीं वि(वि? पा)शां वितस्तां शतद्रुं चन्द्रभागां सिन्धुदेविक-सरस्वतीं च भवतीं(?) हिमवतश्च पादाङ्कुरक्षेत्रोपकण्ठात् कालकावनं चाध्युषि-तवन्तस्तदनु दशदगात्रापरबिन्दवः स्थिरचरणनखाः प्राणवता(?) बृहत्प्रोहाः प्र(दु? कृ)ष्टपेचका विपुलांसा बहलत्वचो वलीतताः स्थूलरोमोत्कृष्टा दुर्मेधसो दुराधारकर्माणः शूराः शूकलप्रायाः स्वरूपाधिका बहुश्रमाः सोत्कण्ठध्यानशीलाः निग्रहेवकलद्विषस्तद्धनप्रकृष्टास्स्वरप्रभावोत्कृष्टा(?) द्विरद(न?)गणाः ।

तत्रैके पित्तवातकफसमीरसंसर्गजन्मानो मदं(क?) शरदि निदाघे हेमन्ते प्रावृषि वसन्ते च सर्वदा विसृजन्ति । अद्यत्वनलत्रासादन्यगजानिर्भयाद्यायु-धाभिघानात् परात्यभिध्रुवा(?)दातिगुरुभारावघाद्दण्डगजमदगण्डाभ्यर्दनावस्नेहेन कर्मणा वातिपीडनाद्धशामु रागाभिसरणहरिणताद(?)मदप्रकृतिमवबुध्य प्र(तो)देन प्रयोगादन्यतो वारणादष्टभूत्यहस्ते स्वकृतमादभृद्दक्षिणश्च पञ्चमया(?) समक्षेपदक्षै-र्योक्तृभिरुपचरिताः कबलीकृतैः पूतिकारखुसीरिगोत्थरिष्ट(?)सिन्दुवारतैरकस्फो-

1. L. about 5 letters.
2. „ „ 22 „
3. „ „ 25 „
4. L. about 18 letters.
5. „ „ 10 „

ताज(ति ? टि)गृध्रकर्णिकारवीरैः रसवञ्जुलनीपसौभाञ्जनाङ्कोलनक्तमालैः सौभाञ्जन-मूलपूरिका(क?)कण्टालिकापटोलत्व(जि?ग्भिः) निम्बबिल्वरणपूति(का?क)र्णमूलसप्त-पर्णत्व(जि ? ग्भि)र्वरणत्थगरळनक्तमा(लाः ? ल)क्रोष्टुवञ्जुलशलकै(?)र्निम्बैरण्डपूतिकैः श्लक्ष्णचूर्णितैश्चाश्वगन्धाविगन्ध(ग ? क)टुमत्स्यकैर्लवणमिश्रैर्निरूहणैश्च कटुतुम्बि-लोणिकादन्त्यक्षिपीलन्नै(?)र्नक्तमालाकिकन्दजातरू(प?प)कमदनफलैः पञ्चलवण-समांशैर्दतिरम्यप्रतिनुभुण्डी(?)बृहतिकाफलैश्च क्षुण्णैः पिप्पलीशृङ्गिवेरहरिद्रावचा-हिङ्गुमिश्र लवणैः पूतिकपिचुमन्दशिग्रुदीर्घवृन्तकैर्लोणिकालव(ल ? ली)दन्त्यर्क-तरुणकैश्च पिण्डमोदकैः शोधितेषु कायेषु पुनः संवर्तनयकबलैर्जम्बूनिचुलारग्वधत्व-ग्भिर्जम्बूकिसलयैश्च समूललामाब्दकैः(?) कृतसंवर्तने ततो बृंहणीयकबलैः काकोली-क्षीरकाकोलीजीवकर्ष(विका ? भक)शृङ्गिविदारिकैरण्डकण्टकारिकामधुशि(ग्राः ? ग्रु) समूलसहासहदेवाकच्छुरिमूलसारिबागलोचीमधुकशशबिन्दुकोपैर्जयन्तीशुकनसाका-कजङ्घीचित्रकक्षीरकाशुभ्रगन्धान्धकबन्धुजीवककशेरुकविसमृणातिक्षपं(?) चित्र-कबलहुलानि धान्ययसानीत्येभिः(?) क्षीणोपघातकैः क्रमप्रवेचिते प्रायां च शोभावं चतुर्थ्यां व्याप्त्या(?) रमणीयकबलैश्च दंष्ट्राश्वेतपुष्पवर्षाभूतण्डुलीयकपिण्डा-ल(लक ? लंका)मधुकमार्कवकाकमाचीप्रपचीवलञ्जलोचीसप्त( ? )माषपर्णीमुद्गपर्णी (मु ? मु)ञ्जा ....[1] मलिभल्लातकपत्राकमलेककरिक(?)वृश्चिकालीत्येवमादिभिरुपतम्यो-पस्थिते मदे प्रापणीपकबलनास्फोतोतमकर्णि...गिरिकर्णमुञ्जावल्लीपमूलपल्लवो(?) मधु ....[2] पिण्डालुकीगलोचीसप्तपर्णिकात्वचः सोञ्जटक(?)मूलमातलुंगमात्मगुप्ताकि-....[3]तवृणशूल्यलाङ्गलकीकिरासी(?) कन्दमकश्च वर्षानिष्पावा....[4] मामलकं गृकदम्ब-मोरुपाटलीनापर्या(?)मूलमित्येतानन्यांश्च दत्त्वा....[5]र्णपुष्पिकप....[6]कैः कदली-

1. Space for 4 letters left blank.
2. " " "
3. L. about 14 letters.
4. Space for 8 letters left blank
5. L. about 24 letters.
6. Space for 5 letters left blank

मूलशतपर्वासभाससहसदोवादि:(?) प्रतिदिनप्रपीयमानैश्च लाङ्गलीमूलशुकनसा-सो.....[1]नोपितासर्षपैश्च प्रस्थशः प्रचैः पत्तूरकुटजसप्तपर्णप्रचीवलैश्च मधुसम्मितैः सप्तपर्णगवे(थु ? धु)ककुटमत्स्यदादुर ....[2] पूर्णक...[3]नलकदलीनक्तमाल मूलभू(त?) कदम्बकशेरुशृङ्गाटकैः केतकमूल(कु ? गु)ञ्जाप्रस्थवृश्चिकालीभिश्च मधुरक्ताभि-रुशीरमल्लिकामूलोत्पलगुलैश्च सुरा....[4]तेर्थशः व्रतैर्यथोक्ताभिश्च का(?) शोधनगुलि-काभिश्चित्राभिश्च कटकवल्लीभिः कृतप्रभेदनाः पुनरग्निकाशिममन्थार्कचित्रकैला-हस्तिपकर्पतीमूलतिरासीकन्दरमरीचिपणिजेककपोतपङ्क्तासौभञ्जनकवलैरञ्जनैश्च (?) नानाविधैः प्रदीपिताः सलोकपालसकलभुवनसारसन्दोहसंभृतेन पितामहानुग्रहात् पवित्र....[5]लेन पञ्चाशत्सिरापथान्तरविरहिणा गुणोद्रेकेण दोषाणां रसमण्डलेन महाभूतानां प्रसादोत्कर्षेण धातूनां विष्यन्देन वृक्षस्य स्वरूपेणौजसां बाहुल्येन बलस्य प्रमाणेन मनस्थितायाः प्रकर्षेण...[6]स्य संश्रयेण सोमस्य जन्मभुवा जवस्य स्थानेन रत्या लक्षणेन व्यञ्जनेन वीर्यस्य दर्पणेन दर्पस्य तेजनेन तेजसः प्रोत्साहनेनोत्साहस्य साधनेन सौम्यतायाः कारणेन कान्तेः संस्थेन.....[7]र्यस्याकारेणाभिरूपतायास्संभवेन सहिष्णुभावस्य समुदयेन सौन्दर्यस्य सर्वस्वेन लक्ष्म्या गन्धगुणैश्चन्दनागरुजातिचूतके..[8]. प्रियङ्गुचम्पकोशीरसप्तपर्ण-द्रमिलपद्मकुवलयोत्पलह्रीरतालीहिङ्गुलुकसिक्तभूमिपरिमलभरितं सक्तुमयमिव समा-पादयता म(दने ? देन) त्रिधा निब..[9].न देदीप्यमाना मृत्योरपि क ....[10] रुरु त्रासपरवशं पलायनशक्ति(म्, कि)मुतसपत्नपक्षस्य ।

1. L. about 24 letters.
2. Space for 4 letters left blank.
3. L. about 5 letters
4. Space for 5 letters left blank
5. „ 8 „
6. Space for 4 letters left blank
7. „ 7 „
8. „ 4 „
9. „ 3 „
10. „ 3 „

एते पुनरम्बुकामा वप्रपांसु(मि)रा(गिर्णो ? कीर्णा) लक्ष्यमाणच्छविप्रसादाः फेनायमानरक्तलोचनाः सुरभिनिश्वासिनः सुसमुन्नद्धकटि(टो ? तटाः) प्राण-प्रगृह्यमाणहस्ता विजृम्भणव्यसनिनः पर्याप्तपूर्णदीप्तवक्त्रा रतिषु स्तंभक्रीडिनः शब्दादिषु बद्धभावा लिङ्गमुपस्थितानामुद्वहन्ति दन्तिनः ।

एते सज्जानिकलकाया(?) प्रमद एव प्रथमया मदावस्थया प्रवर्तित-प्रस(च ? )न्नचक्षूरागाः प्रसन्नसौमनस्याः करविवरगलदविरलसुरभिनिश्वासश्रेणयो गण्डदेशपरामर्शिनः कान्तबृंहिताश्च प्रविलसन्त्यनेकपाः ।

पुनरिमे द्वितीयायामारुद्धकलेवालिकानामावस्थामित्यर्थविजृम्भमाणाधिकामाः पूर्वण( ? )वदनशोभां वाशितामिवातिहेतुमनुपतन्ति ।

एते तु तरुणमदाक्रान्तसमगदाः परेष्वविस्रंभिणोऽन्योनिबन्धयावस्थया गर्वितविजृंभितैः प्रभ्रमन्ति हिमरूपाः किरणतथाते तत्प्रभृत्या( ? ) इव सर्वकर्मसु मूढत्वविज्ञानतया निःशङ्कादेश्याः क्रमत्वादिव सरागजृष्टयो भद्रतये( ? ) क्रोधेऽपि शासनमनतिवर्तमाना बलयोगादिव मदपाटवसुरतयो मानभा-नागत( ? ) ।

ए(वं ? ते) तेजोऽजस्रमुद्वमन्तो मेघा इव सगर्जितविजृंभमाणाः मारुता इव वेगेनोत्तमेन लाघवं प्रथयन्ते । भृङ्गमालामिव गण्डचारिणीं मदावस्था-मुद्वहन्ति ।

एते पुनरसुरा इव प्राणिदर्शं जिघांसन्तो मदमूढाः क्रोधनदशां दर्शयन्ति ।

अमी पुनराविष्टा इवोन्मादेन यत्र तत्र शब्दार ....[1] दर्पधारामिव क्षरन्तः क्रोधवर्षमिवोत्सृजन्तो वृक्षैरपि युध्यमाना वृथैव नक्तंदिनं भ्रमन्तो विहायत्यत्र( ? ) वर्तिनीमवस्थाम् ।

1. L. about 6 letters.

एते पुनरभिजा ....[1] कुशा गणयन्ति, न संज्ञामाद्रियन्ते, नात्मानमभिजानन्ति केवलमविरलविसृतञ्जिता(?) जगदुत्रासयन्तः संभिन्नमर्यादानां सप्तर्मीमिव ...[2] ।

विभज्य सन्दर्शिते यथास्वं स्थानानि राजाज्ञया गजनिकाये[3] राज्यसरःपुण्डरीकमार्जुनेयो(?) हरवृष इवातिवर्ष्मा समसंस्थानस्त्वक्केसररोमस्थल....[4] फेनधवलेन धवलिम्ना क्षीरोदेनोच्चैःश्रवशङ्कयानुबध्यमानः कटकलग्नाभ्यां कैलास इव यक्षाभ्यामभ्यधिकबलप्रमाणाभ्यां पाणिभ्यामुभयतोऽछित्वो वेगरोधरोषदंश्यमानद(र्श? श)नखणखणायितमापरदिव(?) रंहोवेगाकृष्टमिव च दीर्घीकृतदीर्घविशालस्निग्धयोरुद्धान्धवबन्धवैषम्यदोषमुक्तयोर्नेत्रयोरुत्कचकर्णिकारप्रभेण पिङ्गलनिम्ना जातरूपद्रवेणेव लिप्यमानमर्कपादस्पर्शरुषेव सन्ततस्फुरितवृत्तमध्योन्नतप्रौढपल्लवमुत्तानघटनकरालमुध्यञ्जनानां स्थिरमूलतयेव परिपूर्णानां मुरूरार्जुनाभ्यन्तगनतानां(?) तद्वर्णानां च दंष्ट्राणां फेनपाण्डरेण प्रभाप्रवाहेण गगनलङ्घनसमयलग्नं शरदभ्रकुलमिवोद्गिरदुत्तानायतपृथुलसमतलेन शौर्यचङ्क्रमणाङ्कणेनेव ललाटतटेनेव तारुण्यमिव वालीनतराभ्यां क्षुद्रतयेव तीक्ष्णवृत्ताभ्यां रोमशाभ्यां दर्प....[5]कुम्भ्यामिव कर्णाभ्यां, विक्रमद्रुमप्रवालमञ्जर्येव दीर्घकोमलताम्रया जिह्वया, रक्तानुपदिग्धः शुद्धत्वादपूर्वया धूनया(?) समेतमायतानुवृत्तयुक्तोपचितहनुचक्रश्मश्रुचिबुकमालोहिततनुलेखं विपुलतालु समचतुरश्रवृत्तप्रवानमवलीनतलम्ब(?)पीनदशनच्छदमच्छिद्रविमुक्तश्लक्ष्णसृक्कसंवृतास्यमतिसुरभिमुखं दधानः शुभराशितयेव दर्शितमू(र्ध्वो? र्धा)न्नति कृतोद्वन्धनमप्य-

1. L about 36 letters.
2. „ 20 „
3. The construction is unintelligible.
4. L about 6 letters
5. „ 1

पीडितसमाहितं शिरो बिभ्रदेकजमृदुविशदानुवालकोशकेसरमालया हरि-शब्देनैव सहकेसरिणा गृहीतया विजयचिह्नचामरिकयेव राजमानो वृत्तयापि दीर्घस्कन्धया गळन्निगाले निर्मांसया शिरस्यभिपिण्डिताधमाहिता-कुञ्चितैयाषाण्येवाहितविमानकारिग्रीवयोपपन्नः( ? ) श्लिष्टदृढप्रतिपूर्णमांसळांसां-सफलस्कन्धस्थिरबहळोत्तानपूर्णविस्तीर्णवक्षा विमुक्तानुपूर्वशिष्टपीनबाहुर्नीमासे-समाहितप्रतिच्छन्नजानुमांसळासिराजारज्जुघनश्लिष्टजङ्घो( ? ) मृदुप्रतिस्तब्धवृत्त-कूर्चश्च जात्यन्तरितश्चारम्भद उपात्येन चलितलीलाकरणश्च( ? ) वल्गद्धूर्जटिजटा-चन्द्र इव दीर्घतीक्ष्णकचश्लिष्टकूपिकोपुरोगसंसर्गिगम्भीराभ्यन्तरतलै(?)रवलीन-घनबहलतुङ्गवृत्तैर्वात्रारिनीलनिर्मितैरिव लक्ष्मीवासधूलिसमुद्गैस्सरोगानपूर्वमण्डूकान् वहद्भिरन्तःक्षीरिकम्पादिवातिस्निग्धवर्णैः प्रतिसामन्तमकुटमणिकरण्डनोचितैः खुरमण्डलैरुपेतः, शिवाकरत्वादिव वृत्तोर्ध्वघनपीनौ मेरौरुह(?)कोधवृत्तिरही-नत्वादिव वंशोनतावक्ष्यविनतापूर्णपृष्ठश्लिष्टो ललितवल्गितलास्यस्थानत्वादि-मृदङ्गारूपप्रतिच्छन्नाच्छिद्रपार्श्वो जाठराग्निजर्घौत्रजालजालजालत्वादिवात्युद्गन्धो-दरश्चतुरश्रवृत्तया समत्वेनाच्छिद्रतया जघनमजघन्यं दधानः(?) संयतत्वादि-वोच्चैर्वर्धितदीर्घवालमग्नावृत्तिकं च पुच्छमुद्वहन् त्रिवादिषु जवेषु चाधिकप्रमाणः प्रौढादिष्वामयेषु च हीनो जङ्घादिषु धृमत्वे चातिसन्मण्डलो(?) बलरिपु-रिव गुरुनिर्दिष्टकारी नृप इव यत्नोपचार्यो भारसहश्च मुनिवान्निष्क्रोधः सुप्रसादी च पारमिव सत्त्वस्य जीवितमिव ....[1] सो विभ्रम इव समरलक्ष्म्याः साहस इव दर्पस्य सम्भव इव तेजसः सम्पत्तिरिव राज्यस्य जवोपदेश-गुरुरिव मारुतस्य चारुतामूलमिव चन्द्रमसः शुचिरुद्ग्रहा ....[2] जननः

1. L. about 5 letters.
2. " "

प्रियदर्शनः प्रदक्षिणसमाचारस्तुरङ्गरत्नं भद्रवाहनो नाम जाह्नवीप्रवाह इव पुण्यावर्तः, वश्यतोऽपि वाचयन् भगीरथानुभावं(?) भूपाल....[1] हने विस्मय-गरिष्ठा सुधादृष्टिरिव धवलयन्ती दिशः सबहुमानं पपात पत्युः।

स च तुरगपतिरमानुषानुभावो भा(व इ? वमि)वावबुध्य भर्तुः परि....[2]नन वरतखुरवलयविलिखितधराष्ठमाघूर्णमानेकशकेस(क? र)सटमवस्थितस्फुरितरन्ध्रो-दरमामन्द्रस्निग्धगम्भीरानुनादमधुरम(भ? हे)षत। येन सकलमेव भुवन(म)म्भसेव हरिविभ्रष्टेन कुचविवर(?)मापु(पू)रे।

हर्यध्यक्षस्तत्वमभ्यधत्त—पश्य देव तवानुरूपं युद्धसहायं भद्रवाहनम्। अतिबलोऽयम(न?)तिशूरोऽतिभीमोऽत्यरत्तरश्च तिरश्ची तुरङ्गजाति जातस्य सा भूमीति(?)। अहो नु चित्रमयमसावनेकमङ्गल्यनिर्मलप्रदक्षिणावर्तशुक्तिमुकुल-सञ्जातशोभी दुग्धराशिरिव सर्वरत्नसारसञ्चयसम्मतो विनापि निर्मथनश्रमादिह देवं पुरुषोत्तमं लक्ष्म्या सहोपस्थितः। शक्यमनेनारूढेन मन्ये महेन्द्रोऽपि जेतुम्। अवजितो हि पुरासावारूढोच्चैःश्रवा (अ)पि बलिदानवेन्द्रेण। नह्यमुष्य मन्दरक्षुभितसिन्धुगर्भक्षिप्तस्य जलप्रकृतेरीदृशास्तेजोवर्ण(त्व? ब)लजवा भवितु-मर्हन्ति। जवप्रस्तावे चास्य सलज्जजवः प्रभञ्जनो भग्नपक्ष इव पक्षिणां पतिर्निरुध्यमाना इव हरितो मन्दचारामिव च मानसं प्रतिभाति। वयस्थाश्चायं वासुदेवसबाणबलिशत्रुभक्षभञ्जनक्षम इति (?)।

तस्मिंश्च राज्ञानुमते लोकलोचनानुगते क्रमेणापरेऽपि समुत्तस्थुरम्बरामिव रंहसा तरङ्गयन्तस्तुरङ्गमाः। तांश्च सविनयोद्धृताग्रतर्जनीकं नि(भि? र्दि)शता बलाधिकृतेनोप(चक्रमे) क्रमेण वक्तुम्। इतो दृष्टिदानेनानुग्रहः क्रियताम्।

1. L. about 25 letters.
2. „ 12 „

एते हि भवद्भुजशिखरसमभ्रमत्रस्तसिन्धुवोगद(?)[1]....भिमानेन त्वच्चरणाम्बुजरेणुचुम्बिचूडेन काम्बोजेश्वरेण विश्राणिता विद्रुमद्रुमोत्कीर्णा इव ताम्रकेसरलोमवालधित्वचः शोणाः ।

त इमे बाणा(व ? स)नसमानकालनामितेन वायुनाथेन(?) मयोपनीताः काळाञ्जनधातुगुहानिष्कृषिता इव कृष्णवालधित्वचः सर्वे रामां कालाः(?) ।

तानिमानलीकाहङ्कारगर्वदुर्विदग्धान् गान्धारपतेः प्राणतुल्यमाकृष्टा(न्) निष्टप्तसुवर्णनिर्मितानिवावगच्छ पीतकौशेयसन्निभबलामेरामत्वचो[2] हरितेत्वैदण्ड(?)द्विरदबृन्दद(ध ? न्त)कुलिशोद्धाट्यमाननगरगोपुरार्गळैकप्रघटघाटितोत्सेकेनाध्वराजेनोपायनीकृता हरिन्मणिशिलाप्रसूता इव शुकपत्रहरितरोमकेशबालत्वचः पीताः ।

त एते त्वद्भुजदण्डमन्दरमथनसं(भृत)ज्वेरष्टसर्वस्वदानसन्धिना सिन्धुराजनोपहृताः क्रोडाङ्गारराशय इवाच्छाच्छहसितच्छवा धौतताम्रतमत्वचः श्वेताः श्वेतरोमवालके(व ? स)राः कर्काः । तमिताः तादृशा एव दर्पदळितोद्दामतैलोरःकवाटा विघटनाप्रावृतेन विक्रमद्वारेण निष्कृष्टाः कृष्णबिन्दुजालकनसम्बाधजठरसक्थिवक्रासक्तभृङ्गकलङ्कितोत्फुल्लशेफालिबनमहोराः कुकुंटाः(?) ।

त एते त्वद्दण्डाभिपातचकितमेचकोपमेचकप्रतिप्रेषिताः तुषारवारिगर्भोषितगगनाभोगभासो भास्वन्मुक्ताफलधवलवालकेशरोमाणो बलभिन्नीलत्वचः । कौञ्चत्र(?)न्तानेतान् भवद्भुजकुलाकुलितकूलोपकूलकालितानाकलितानेकवर्णकेशकेसरवालधीनालोहिताम्रसंबाधत्वचो विक्रमाकारानुरक्तसिंहवर्णान् । एते त्वत्प्रतापतप्तात्तमुन्मुक्ता वन्तशरकंसकुमुदवर्णा श्रीनदीपुलिनहारा गौराः(?) ।

1. L. about 4 letters. 2. We may read वालरोमत्वचो.

-तानि ....[1] प्रकाशनकेशवालनीलिमोपपन्नानालक्ष्यानुकृतघनमषितम- हिमाचलशिलापुञ्जानञ्जमूर्धजान् (?)।

त इमे भवत्प्रभाव ....[2] शोचिषो विकचमोचपुष्परोचिषः पाकरक्त- कर्कन्धूफलरुचः प्रवालाताम्रवाला बलारिगोपलोहिताश्वणो(?) वर्णानुवर्णिनः कालव ....[3] कारा कल्पान्तानलशिखाकलापकल्पाः कालवालाः।

तेऽमी त्वद्यौधवीरवितितायोधनावधूतयौधेयाधिपोज्झिताः मृष्टभालकशालि- शूकचक्रवाकपद्मकेसरकुण्डनच्छवयो हरिवर्णानुवर्णाः(?) संवर्तपवनभग्नकनक- शैलशिखरविभ्रमा बभ्रवः।

त इमे त्वदश्वबलरजोवश्यायरुद्धाकाशजनितयुद्धनैराश्ययवनेश्वरप्राभृती- कृता महेन्द्रचापचारवः शिरीषकुसुमदामश्यामळा हरिताळरजोराजिरोचिष्णवः सुवर्णयूथिकासवर्णाः कृफलाकान्तयो हारितवनहारिणश्च बालनळिनवर्णनिर्मित- वेदिवसमापादयन्तः(?) पीतव(र्गाः ? र्णाः)।

त इमे तुमुलसम्प्रहारकातरतरळहारहरितानिलरोमानिहित(?)लोहितत्वचो मयूरगळवर्णाः।

तेऽमी त्वत्प्रता(प)विषाविषह्यवेगभेषजभावभीताभिषहविषश्व(?)नाथ- प्रेषिताः स्फुटितपाटलिकुसुमगर्भशुभ्रशोणरोमाणः पाटलाः।

तानिमानमलखड्गदारितामन्दरोषोद्दामकन्दरेशरुदत्परिग्रहानुगृहीता- (इ ? न)वधारय पुण्याभिषेकलग्नप्रयागवारिकणकरालितानिव कृष्णश्वेततनुतनूरुहं इइयमा(ना)न्।

1. L. about 26 letters.
2. ,, ,, ,,
3. L about 14 letters.

एते भवदनीकसंवेष्टनोपरुद्धापयानपार्वतेयागतिविकीर्णचित्रकृष्णरोमाणो नीलपदतलाः(?)।

त एते त्वत्सैन्यचापकूस्पष्टनिःसृतानुच्छेषगुच्छाच्छादितावाच्योर्चिताः सिताल्पानल्परोमाणो(?) रक्तपाटलाः।

तथैते त्वत्पादनखरत्नादर्शदृश्याकारोरश्यकोपदीकृता विरलशोणबहुलधवलरोमाणः सुमनापाटलाः।

तानमूनतितिग्मरश्मितेजस्तैक्ष्ण्यदग्धद्रुतकश्मिरारिभिरुतोल्लोषिणः श्वेतगौररोम्णो निर्माणाय दर्पपञ्जराद् गुञ्जपाटलान (?)।

एते शरशतशल्यजालशकलितश(ल्यु ? क्त्यु)त्सिक्तशतानीकेन त्वया स्वीकृताः सितबहुलकतिपयबभ्रुरोमाणस्तिमिशपाटलाः।

त इमे त्वत्कोपानलप्रसरनिर्वाणपार्वतेयवर्गदीर्घप्रयाणवार्जिता हरिधवळतनुतनूरुहा हरिपाटलाः सकलभारतवर्षमध्यवर्ति(रो ? स)त्रवर्गनिर्व्याजनिर्जयार्जिताश्च।

एते निजवर्णोपायजनितनानानामानो विविधवर्णसारमिश्रकेसराश्चाङ्करीतयश्च सिद्धार्थकाश्चाम्रवर्णाश्च पुष्पचित्राश्च पुण्ड्राश्च मण्डलचित्राश्च वारणमयूरमण्डूकतित्तिरिक्रौञ्चहंसटिट्टिभकलविङ्ककुक्कुटकृष्णहिरण्मयर्षभमल्लिकभैरवैरेर(?)मूषिकोपमैरनुबन्धापबन्धवैषम्यवैरूप्यचापल्यपिङ्गलिमाभिरायामप्रसादस्नेहविस्तारोपपन्नैर्मणिप्रकाशैश्च लोचनैर्वीर्यलवन्तोरिव स्रवन्तो गुणसादृश्यानुपतन्तश्चातुर्वर्ण्य(?)मृजुतनुतुङ्गदीर्घनिर्मांसमुखास्तीक्ष्णाक्षिमण्डलास्त्रिगम्भीराः पञ्च मृदवः सप्तगगनदहनपवनलाघवातिरेकजनिततैक्ष्ण्याश्च(?) क्षितितलगौरवायत्तं मन्दिमानमन ....[1] वयन्तो गुणसामासमानीतभद्रभावाश्च(?) सात्त्विकप्राया अल्प-

1. Space for 4 letters left blank.

रजसोनिरस्ताम(य)त्वात् समरसबहुळा विषमरसविरळाः खररसविहिताश्च कसतसृकणो(?) द्वाभ्यां त्रिभिश्चतुर्भिः श्रेण्याश्च ललाटे स्तुवदानेनैकेन निम्र(?) देवमणिनाम्ना कण्ठे चैकेन रोचमानाख्येन बाह्वोर्द्वाभ्यामङ्गद ....[1] रन्ध्रयोः, मेखलासमाख्याभ्यां चतुर्भिश्च वक्षसि प्रदक्षिणे स्निग्धवर्णेन नाभेरमहद्भि(?)र्भुवै-श्चापरैः प्रपानादिसम्भवै ....[2]गशतपदीवीभि(?)श्चानन्दिताभिरानन्दितस्थानजन्म-भिश्चालङ्कृताः स्थिरसुबहळबहुवर्णया चापार्थिव्या स्निग्धस्तया चोदक्या . . .[3] काश्याश्च रूक्षत्वितन्वी(?)मस्पृशन्तः शरीरसत्त्वगतिवर्णगन्धस्वरप्रभोपपन्नाः पञ्च-षट्सप्ताष्टनववर्षाभ्यन्तराश्चतुरश्रा दिक्षु कर्मस्वनेकभेद . . .[4] नियुक्ता वना-भोगा इव श्रीवृक्षकाभिलाषिता (?), सुरप्रासादा इव स्वस्तिकवर्धमाननन्द्यावर्त-(मानाः ?) सङ्गताः, वर्णा इव स्वरव्यञ्जनलक्ष्याः, वर्षादिवसा इव दृश्यकालिकाः, सरत्तीरभाभापीतिवारुणीचारुसन्दर्शभाजो च(?) बहुळपक्षा इवाशुक्लाः, सुनिमि-त्तोदया इव कल्याणवेदिनः, कल्याणवासा इव दर्शनीयाष्टमङ्गळाः, सिन्धु-प्रमुखदेश्या अप्यदृश्यमुखाः, शुक्त्यावर्ता लक्ष्मोचिता अप्यकृशविग्रहाः, सरन्ध्रा अप्यपेतसकलदोषाः प्रलयपवनवेगाभिष्यन्दवम(नि ? न)निर्मिता इव सर्वभोगभाजो वाजिन इति ।

अथ राजा यथानुरूपमूर्जिताभिः सहार्थपूजिकाभिः स्तम्बेरमान् तुरङ्गांश्च कुलपुत्रेभ्यः संविभेजे । ततश्च स्वामिप्रसादस्वीकृतप्रीतिषु प्रति-पालयत्सु समरमुत्सवं दिवसमिव प्रवीरेषु, दूतमुखश्रुतार्थेन द्विषताभ्युपेतसोद्धव्य-सङ्ग्रामादिग्देशकालयो(?)रुभयबलकुलपुत्रका(पा?प)दानघोषणापरिच्छिन्नस्ततः प्रचरि-तेषु चामरग्रहणेष्वचर्यमानेष्वायुधेषु पूज्यमानेषु वाहनेषु दीयमानेषु

1. L. about 12 letters.
2. " 28 "
3. L about 25 letters
4. " 14 "

द्रविणराशिषु सविशेषमाबध्यमानेषु वीरपानगोष्ठीमण्डलेषु प्रियप्रोत्साहन-द्विगुणमण्डितास्वनुमरणकृतव्यवसायासु वीरपत्नीषु स्वयं राजा पूतपुरोहितो मन्त्रसंस्कृतैः (स ?)तीर्थप्रधानभूतैर्गङ्गायमुनयोः सङ्गमाम्बुभिः पञ्चरत्नगर्भैर्लिप्तवणाप्लुतः समभि(हुत्य ? हूय) समित्समिद्धं जातवेदसं सहात्मनातिसृज्य सर्वस्वं द्विजेभ्यो यथाविधि कृतौपवस्त्रः शस्त्रवाहनमर्चितमनुदिश्यैतदावसंरम्भं[1] संस्थितस्य समस्य(?) मुखे कुण्डलयुगळमिव ग्रहनक्षत्रदीप्तरत्नतरळं तदहोरात्रं विपरिवृत्तमासीत् । उदयकूटमुल्लिलङ्घयिषुरपर इव हेमकूटो लाक्षारसरक्तमूर्तिरुत्क्षिप्य त्रियामामयं नीलांशुकपटमुदजिहीत भगवानुदंशुरंशुमाली । सकलराजक्षयचिन्तयेव सञ्जुकुचुः कुमुदानि । समितिसन्दिदृक्षयेवोन्मि(मीषे ? मेष) कमलाकरेक्षणैः क्षोणी । तिग्मतेजःकामुकानां समीहितानीव सङ्घटानां सञ्जघटिरे रथाङ्गनाम्नां मिथुनानि । रणरसादिव पटुतरमार(द ? ट)न्तः स्वयमितस्ततः पतितुमारेभिरे सज्जपत्राः[2] । प्राप्ते च प्रभातसमये सूर्यकालास्फाल(न)बोधितमिवोत्थाय सर्वमेव सैन्यं (सा ? सन्ना)हमकरोत् । तथाहि— दिनकरहरिहन्यमानतिमिरकुञ्जरानीक-(फि ? पी)नफीट्कारानुकारिणां जजृम्भे[3] भैरवो रवः । पटुपटहानाञ्च पाटयतामिव श्रवणहृत् साटोपदर्पनिर्भरः सुभटपटुहुङ्कारपूराध्मातभुवनाण्डकोशस्फुटनाराटितविभ्रमो बभ्राम त्रिविष्टपे प्रदेशान् विचिकीर्षमाण इव वीरसैन्यसन्निवेशभूमिमनुगतशङ्खकांस्यकाहलविषाणवंशमद्दलानको मदकलमातङ्गरोषरभससन्धुक्षणक्षणेनैव युगमिवोपसंहरन्नतिमहान् निनादः(?) ।

दन्तिनश्च मुखसन्निहितान्तकप्रसारितोभयभुजदण्डकल्पैः कल्पितप्रतिमुक्तसुतीक्ष्णकार्ष्णायसकोशमुक्तैर्दन्तमुखैः प्रतिजिघृक्षन्त इव सर्वजगज्जीवसङ्घातमति-

1. It appears that some portion is missing here.

2, 3. The Visesya is missing.

बहळविकटलोहकङ्कट(स्व ? सु)घटनाप्रकटकठिनमूर्तयो भयभङ्गुरभुजङ्ग(ग ? ज)-भोगमण्डलनिबि ....[1] त्थितप्रचलितवैजयन्तीपताकाप्रक्षीणया केचिदपरे विकटया इतरे जालिन्या अन्ये अर्हस्य तथा चापरे कौञ्चपङ्क्त्या(?) पुनरपरे गुलि ....[2] कोर-कार्मुकधरबे(द्ध )गोधाङ्गुलित्रैरामुक्तशिरस्त्राणकवचकञ्चुकैरत्रस्नुभिरागमज्ञैरज्ञातपृष्ठ-(दानै ? भाग)रनेकायुधव्यवहारकुश ....[3] मृत्युहस्तनिक्षिप्तजीवितैर्योधपुरुषैरधिष्ठिताः कर्णशङ्ककर्णशङ्कुकडिण्डिमघण्टाचामरायानहेमकक्ष्याग्रैवेयपटुपर्याणवः(?) सर्व-प्रहरणपण्यपट्टनायमाना (प ? वं)दिभिरिव मुखपातिभिर्मदलोलैर्मधुकरकुलैर्गीयमाना धीरखेलं प्रचेरुः ।

वाजिन(श्याकि ? श्याति)जवनतया क्रोडीकृतगगनतलेषु रभसलङ्घनेषु सहश्वासैः प्राणा ( न ? नाम )प्यवपतनभयेनेव पातितखलीन(संवन्दि ?)संयत-मुखाः, पृष्ठदत्तप्रादिष्टाद्विगुचर्मप्रतिष्ठापितमरसारचित्रसारपीठा दर्पनिर्भरभरितदेह-दळनशं(क)येवोरःपुच्छवाग्रेचर्मपट्टगाढकक्ष्यावन्नद्वारपालिका(?) चलाक्षिकसुपक्ष-चर्मच्छन्ना गुप्त ........[4] कलमर्षणा निर्मलकार्तस्वरपुलकपङ्क्तिभूषितेन जव-धुतघनघटाच्छतशतस्रादा शकलशारितेनेव(?) च्छादिताङ्गाः, पञ्चाशता शराणां भेदच्छेदयोग्यरूपसंस्थितमुखानामापूर्णैश्चतुष्केन चक्रतोमरकणयक ....[5] रसप्रासा-नामुभयपक्षयोपिकेन(?) द्विकेन कुन्तशरासनानां चतसृभिर्ज्योतिर्भिश्च खड्गाभ्यां च काष्ठापा....[6] वर्तभिरगदौषधै(र)ञ्जनधूमवर्तिकाभिर्मात्रत्रीहिमुखानामापूर्णैर्वृद्धिपत्र-सूचिपोत्रसूत्रतन्त्रीरज्जुशङ्ककोटरपालिभिश्चाध्यासिता(?) शस्त्रपूर्णतया च समिति-

1. L. about 18 letters
2. „ 30 „
3. „ 18 „
4. Space for 4 letters left blank.
5. „ 2 „
6. „ 1 „

शतेषु कालप्रमुखप्रविष्टनिर्गतकायकार्कश्यभग्नाभिरिव तद्दंष्ट्राभिः करालिताः शालि-होत्रनिकृत्तपक्षप्रतिनि(ध्वा?धी)निव प्रेङ्खयन्तश्चामरकलापानायोजितोहयका(?)-मणिकाञ्चनरजतप्रायमण्डनाः सक्तसक्तुहस्ता धृतजलभृतयो वप्रम्बिशररावणं मधुरसर्पिषाका( ?) कृतकर्मभिरपिनद्धलोहजालैः सर्वायुधकुशलैरशिथिलभर्तृ-भक्तिभिरभिवरणापसरणोन्मथनादीनां देशकालाभिज्ञैर्जितश्रमैरभीरुभिः सादिभि-रधिष्ठिताः प्रातिष्ठन्त ।

रथाश्च रणितकिङ्किणीका रत्नखण्ड ....[1] विविधव्यालरूपरुचिरपर्यन्तफलक-भित्तयश्चित्रकूबराः, सुस्वामिन इव सुखापाश्रयाः, प्रभव इव प्रघटिता-क्षेपणाः, बलवन्त इव प्रवृत्तचक्राः, मलयमारुता इव सानुकर्षाः, केसरिण इव सहेषाः, सदारवैस्सुरभिख्यातपौरुषैः कृतवेदिभिरदृष्टपृष्ठैरिष्टकीर्तिभिर्वीर-व्रतानुवर्तिभिः सनाथीकृताः, सर्वसमग्रसमग्रधारिभिर्गृहीतरश्मयः प्रनृत्ता इव(?) प्रोल्लसत्पताकाः प्रावर्तन्त ।

पत्तयश्च पिनद्धपरिकराः केचिदरुणा गन्धवसन(वास ?)वासिनः क्रोधानलादि(व) विनिर्गताः, केचिन्मेचकांशुकपरिहिता मेघोद्गादिवोल्लसन्तो महाशनयः, केचित् पीताम्बरपरिग्रहा ग्रहोपरक्तादित्यमण्डलप्रविष्टा(न्ता ?) इव देदीप्यमानाः, केचिदभिनवरम्भागर्भपत्रपाण्डरदुकूलभाजो मूर्तैरिव यशोभि-रुपगुह्यमानाः, केचिच्चित्रवस्त्रसंवस्त्रिकास्तेजोरागादिन्द्रायुधेभ्य इव पुनर्जायमानाः सर्वे च निबिडनिबद्धविकटकुटिलकुन्तलाः, कृतहस्ता, हस्तवलयवेष्टितप्रकोष्ठाः, ख(गी ? ग)वन्तो निषङ्गवन्तो धनुष्मन्तः सशक्तयः सतोमराः समुद्गराः सगदाः सा(र ? )सिधे( न )वश्चित्रकञ्चुकाश्चित्रमाल्याश्चित्रवाजाश्चित्रगतयश्चोत्सर्पयन्त

1. L. about 3 letters

ऐक्षिष्ट च प्रतिभवनमनुप्रयागतिरमागृहीतुभूमि समदाकगन्धगजघटाबद्धा-
न्तकारतया ....[1] वर्षाध्वरमिव जलधारातिभारेण पाति(?)मनेकसामन्तसहस्रात-
पत्रमण्डलान्तरतया वेलातटपुलिनमण्डलाभोगधवल ....[2] कटभाण्डमण्डितानामनव-
रतनभस्तलोत्पतनव्यसनादनीक(?)स्पर्शनाभिज्ञखुरपुटानामिवानेकसहस्रैराजानेयवा-
जिनां स्थू ....[3] सञ्जातघूर्जितोन्मदर्शनमिव कल्पापायभुवनमाकल्परश्मिराजि-
राजितलोकनिरन्तरतया पारिजातवनमिव सागरेण मथनभयात् प्रागेवोपा-
विष्कृतमुल्लसितानेकरथशतमितपत्रकाव्रातशीतातमापततघनतुहिनपटलधवलिताम्र -
मिव(?) ....[4] म्य ....[5] भृगारण्यं भुवनकोशमिव नी(ल)श्वेतारुणशबलहरितभटाश्वकेतु-
मालोपपन्नम्, अन्तकनगरोद्यानामिव स्फुरदसिपत्रपातभीषणं, नन्दगोपालगोकुलमिव
हरिबलरचितचारुनामं वृन्दावननिवेशमिवोच्चावचघनान्धकारीभूतं रामायणमिव
कृतपङ्क्तिरथक्षोभमन्थरं कुरुपाण्डवसमरमिवोन्नामितगजघटोत्कचसुभटासिंहनाद-
कारित(सू ? क)र्णशक्तिव्ययं ध्यातमिव(?) कृतशमान्तरं नानापङ्क्तिसुस्थिनं सुरस्रोत-
स्विनीस्रोत इव सुरचितचारुपक्षपक्षं कुचतटमिव क्रान्तोर(स्यं?स्कं) गणकमिव प्रति-
ग्रहविभक्तबलविचारं शास्त्रमिव सर्वतोवृत्तिसम्पादितप्रकु....[6]लं दुष्करकाव्यमिव
रावितजन(?)पदनिवेशरचितसर्वतोभद्रं कोशागारमिव सारफल्गुविभागानुरूपक-
ल्पितस्थानं कालिन्दीह्रदमिव ....[7] नाच्युत ...[8] दगोपालरुद्धनिर्गतनागस्य नवागम-
निहितवमनप्यमितवनसमर्थम्(?) अनुलोमसमीरणम(प्य ? पि) प्रतिलोमप्रभञ्जनं

1. L. about 6 letters.
2. „ 32 „
3. „ 14 „
4. Space for 4 letters left blank.
5. Space for 4 letters left blank
6. „ 3 „
7. Space for 6 letters left blank
8. L. about 2 letters.

(स्वांश्च ? स्वब)लोद्धर्षितमपि परबलोद्धर्षितमायस्तसेनापतिप्रोत्साह्यमानमप्यना-र्यस्तस्वामिसमधिष्ठितं जप्यहोमपरपुरोहितपुरुषोद्धुष्यमाणकृत्याभिचारं मौहूर्तिक-प्रभृतिवर्ण्यमानस्वपरकर्म सिद्ध्यासिद्धिमतिघोरदर्शनमरातिसैन्यम् ।

अरिबलदर्शनोद्भूतरोषरागोन्मुक्तघोरघोषभीषितभुवनत्रयं च नृत्यतः स्वसैनिकानत्यायासानुपशमय्य हर्यक्ष[1] ... चानि संज्ञाचिह्नानि सर्वव्यूहभिदा दुर्ज(यो ? य)नामव्यूहेन प्रतिव्यूह्य सम्प्रहारायाभ्यचोदयत् ।

अथोभयोरपि सेनयोरभ्रमाला इव मरुद्भिराधूयमानाः सुभ[2] .... नुर्य-ष्टयो निष्टप्तकनकरसलिखितललितचतापत्रभङ्गभासुराचिरप्रभा भैरवं रसन्त्यः प्रारेभिरे प्रमोक्तुमितस्ततो रुद्धकामविजृम्भमाणाः प्रभूतानि शरवर्षाणि(?) । मुक्तसङ्गमरि(प ? ब)लान्यवगाहितुं स्फुर(न ? द)र्कतेजसः प्रका(र ? श)दुर्नि-रीक्ष्या वीरा इव त्यक्तकोशा विरासयश्च चामरधवलपक्ष(?)मचलरन्ध्रप्रसृता हंसा इव बहलरंहसो हयाः परस्परं समापेतुः । इतरेतरं दर्शनरभसमुक्त-द्विगुणोष्णमदाम्बुधाराः करटस्थलनिपति(त)नीरनाराचयष्ट्य इव रागोद्व-मानलोहितमुखच्छदांशुका धूपाञ्जनदानसन्धुक्षितेन रोषवह्निना प्रज्वलन्त इव समभिपेतुरशनिपातवर्षसंरम्भं समन्ततो मतङ्गजपतयः । पतयश्च भुवः परानीकदर्शनविशृङ्खलामर्षवेगावेगप्रेरितविविधवाहना(नाः ?) हन्तुमन्योन्यमा-गूर्यमाण( न ? )हेतयो हतहतेति सैनिकानादिशन्तः कृतान्तादिष्टा इवापर-मखिलभुवनसं(क ? ह)रणक्षमं कल्पान्तपतङ्गदुर्निरीक्ष्यं रूपमुद्वहन्तो हरय इव हरिभिः (प ? प्र)तिबलप्रवीरैः (सु ? स)मं सम(ज्ञ ? सज्ज)न्त ।

तस्मिंश्चान्तरे झटिति जगत्सामग्रीग्रासग्रहणयोग्यं वपुरुपाददानो[3] ....

1. L about 10 letters
2. „ 3 „
3. L about 4 letters

रुक्षलोकमाकाशमावृत्य ¹ व्यजृम्भतोभयबलनिपातसीमजन्मा² महावराहकेसर-
निकरकर्बुरः परागसङ्घातः । यत्र समामेव लिखितमिव....बधिरमि(वश ? वाच)
तनीभूतमिव च निष्प्रातमूढ पताकिनाद्वय (इव ?) क्षणमवावतस्थे ।

... पुनरतिसत्त्वतया निगृह्य तां तामसीं विकृतिम् .... न्धकारे सौ(स्ति?ति)-
कविमर्दकल्पः क्षणमवर्ततातिघोरः सम्प्रहारः । ³ तदा च दारयतेव रोदविधु- ⁴
वर्णकोणनिर्दयप्रह ... न भिन्दतेव .... राणि प्रचण्डदण्डाभिघातमुखरितानां
भेरीणां भैरविण (रवेण) पाटयतेव श्रोत्रपुटानां मदताधिकानां(?) धू (र्जिनि ? र्जटि)- ⁵
ताण्डवाट्टहासपटीयसा .... नासारटितेन दर्पाध्मातत्वरप्राध्मायमानानां प्रस्त-
समस्तब्रह्मस्तम्बेनाम्बुजानामम्बुनाभचण्डच्छिचदा( ? )पातभीनाकुलकुवलयापीड-
पीड्कृ(र ? ता)कारेणारणितेन, वाद्यमाननानावादित्रनादमेदुरेण मृत्युदेवता-
राह्वनोद्गीतेन, नृत्यत: (स्फु ? भ)टवर्गस्य वर्धमानसुराङ्गनाजनाङ्कजोत्कण्ठेन कण्ठ-
रवेण, खरखलीनखणखणारणितकलितेन खुरपुटपतनवाचाटितविकटधरणिपृष्ठ-
वाहानां घुरघुरुमाङ्किकानिर्घोषघर्घरेण हेलाहेषितेन प्रतिकुञ्जरसङ्घट्टझटझटाय-
मानदशनकोशानामशनिपातभीषणेनानेकशस्त्रपातव्यतिकरत्रस्तभृङ्गवृन्दोन्मुच्य -
मानगण्डमण्डलानां डिण्डिमस्वरस्यूतेन मातङ्गानां गरीयसा गर्जितानुस्वरेण,
परस्परास्फालशकलितकोणकूबराणां रथानामप्रतियातमांसलेन सङ्क्रीडितेन, सु-
भटोद्दण्डपीडितानां कर्णज्वरकारिणा कार्मुकाणां टङ्कृतेनाकर्णविकृष्टमुक्ताना-
मुक्तेन जनवर्धितेन(?) लुप्तनभस्तलान्तरं पततां पतत्रिणामतिखरेण हुङ्कारेण,
करिकरचरणनिर्भज्यमानकलेवरास्थिसङ्घा(ट ? त)पटपट शब्दमिश्रेण (व ? )श्येन-

1. L about 22 letters
2. „ 30 „

3, 4. The two lacunæ cover about 25 letters
5. L „ 2 „

गृध्रबलकङ्ककङ्कक्राक(हा ? भा)सादीनामुग्राण्डजानामुग्रतमेन विरुतेनाबध्यमान-कोलाहलमतिबहलरजस्सम्भा(रम ? रा)न्धकारितमनवरतविपरिवर्तमानविविधशस्त्र-जालसङ्कुलमिव दिव्यवराहरभसपोत्राभिघातवारिताधाराण्डकपालपृष्ठस्य तपस्विनो-ऽपि वेवेष्टमानमहोरगपरम्पराणां गणतलमनुकरोतिस्म मूलरसातलस्य(?)।

ततश्च विस्रब्धसम्प्रहारक्रियाविघातरोषितेनेव सोष्मणा वीरविग्रहप्रवृत्तेन रक्तस्रोतसा भिन्नमूलः शनैश्शनैरुपशे(शा)मे रेणुराशिः। विरजसि मनसीव मनस्विनां शस्त्रालोकप्रकाममनिर्मलप्रकाशितशितशस्त्रपरम्पराहलहतीः शीतगुणमा-दिदीपिरे शूरा इव सौरा मरीचयः। तेऽयान्यपि मर्मीयांस्यपि मर्माण्यपि प्रयतगुणान्यप्यपराण्यप्यङ्गभूतान्यपि गुप्तमर्माण्यपि वर्माकीर्णान्यप्यङ्गानि इव संहतान्यसङ्गपातनोभिन्दति तीक्ष्णा महाशयाः(?)। प्रज्वलत्सु उल्मुकेषु आवद्धपीतासु प्रतीयमानाः प्रलयाय पेतुः प्रोत्खुपातं पतङ्गाः। सतोमरा-प्यभीरववरानशकमभ्यद्रवद् भगवान् (?)। भटजनकरानुवर्तिनो नखराः किसलय-मिव रिपुहृदयमथ कठोरमपि दारुणा दारयाम्बभूवुः। भूमास्पदमिवामर्षे बहुगुणाधिष्ठितमन्योन्यविषये जननमामासुः सिद्धिमहीनरूपाः शक्तयः। स्पृहा-वन्तोऽपि प्रसाद्विषु न विश्रामभीयुः सत्पुरुषाः। प्रजनप्रवृत्तस्यन्दनासु भ्रमः-कबन्धासु बहिश्शिरोष्ठाव इवासु तानाभिरक्षुः वंशसम्पन्नाः मनसः सुमनसा-मुपरि(प)तद्भिः परुषपक्षशब्दैः शिलीमुखैर्मधुनीव मुखनिबन्धनान्यपि यत्नजीवि-तान्यविकचानि बालकमलानीव निर्दयमलूयन्त। लोकस्यापि पीनकर्णिकानि-शिरांसि बाधज्वलनज्वालाभिरिवामसृपानसंभृतद्युतिभिः(?) क्षयकालविजृम्भिताभिः[1] समारम्भितप्रहरणावलीभिर्जीवलोकं संहर्तुमसंह .... तैः कल्पापायवायुभिरिव कुलगिरयो महायुधैरपवर्जिताः परितः पतन्तः स्फुरितरत्नकटका भुवमकम्पयन्

1. L about 3 letters

भूभुजां भुजाः । छिन्नेष्वपि चरणेषु पुष्कलागतिरभि ....[1] नामक्लिष्टरुक्प्रपञ्चान्यङ्गानि धूसरीबभूवुर्न यशांसि । मर्मदृढप्रहारविह्वलानां महौजसामुन्नतिमत्यः प्राप्यधत्तन्तमूर्त(?) ....[2] ।

[3] . . . . . . विनयेनानुत्तानेनापालितेनाकुब्जेनासर्वदिक्येनाकुञ्चितकर्णालब्धोदरेण भुग्नेनाप्रकम्पितेनारुचकारवस्था ....[4] प्रलेपनाख्यैः पञ्चभिः कक्षदोषैरकटाक्षता न पुरस्तान्न पृष्ठतो वा प्रविष्टेन विक्रेणवाचीकृतेनानुद्यतेनात्यनुद्यतेन च मत्तवारणा ....[5] शङ्कुवदुद्यतेनोन्मेषनिमेषभ्रमेण मुक्तनेत्रेण काक्षकूणनिमीलितेनातिविवृतसंवृतोष्ठेन, जिह्वालेहनेनादन्तदर्शनेनागुप्तक्षिप्तभ्रुवा, नासासङ्कायिणानतिहासस्पन्दनेनामनाभदर्शिना दर्शनमनस्समाधानशोभिना मुखेनापिबन्त इव लक्ष्मनत्युच्चातिनीचमङ्गुळीभिस्त्रिभागतः संस्तुताभिः कालिकाभिरिवातिश्लिष्टाभिरगृहीतचापमध्या नात्युच्चातिनीचमभूमिकटुग्मरस्थलोदरनीविकेपु कराळेन पुङ्खिना तलकृतपुङ्खसाम्येषूद्धृतादिदोषमुक्तेषु हतावेवेषून् क्षिप्तमप्रवेपितमच्छावघट्टनमनत्युत्तानकलपुषमन्याभिचामरमेकैकदीयमानसायकाः सन्धाने च न परिलोलयन्तः पुङ्खेन पर्वणा सन्दधानमुष्टिभ्यां घट्टयन्त्वेन सज्यमानसन्दिह्यमाना न प्रवेपमाना न कार्मुकामजिनोत्क्षिपन्तो नावक्षिपन्त नामृष्टप्रमृष्टमप्युच्छिन्नमखण्डितश्च सन्दधाना घर्मार्ता इव घनकरकोद्भासिनो वरुणगणा इवावृत्तपश्चिमोपस्थानाः सुवंशा इव दूर्जिताकटुण्डस्पर्शदोषाः धर्मपरास इव दुर्गतिपतनपरिहारिणः परम्पराचक्रमिव खड्गभ्रमतोऽप्यष्टादशसु खड्गचारिषु चतुरश्राः प्रस्फुटप्रकीर्णपक्षाश्चन्द्रयोगा इव दर्शितवैशाखगतयः सुभाषितप्रकारा इव साध्वालीढगतयो, लाभोत्कटा इव बहुभ्राङ्कितप्रत्यगतोज्वळाः(?),

1. L about 20 letters.
2. L about 26 letters
3. One folio is missing here
4. L. about 18 letters.
5. „ 11 „

मलयमारुता इव ललितवल्लीनर्तनाः, सरित्प्रवाहा इव बाह्यावर्त(न?)शोभिनः शुद्धिकामा इव गोमूत्रोत्सेकिनः, श्रुतिवादा इव भद्रगतिदर्शिनः, प्रलयवायव इव सानुक्षणाः, मुरवा इव मधुराहतयः, स्वावयवा इवाकृष्टपृष्ठाहतयो भ्रान्तविषावप्यप्रान्तयः(?) कुर्वन्तोऽपि कोर्परस्कन्धबाहुच्छेद्यकान्यच्छेद्यरा(र?)गा रचयन्तोऽपि परोत्सङ्गमसक्तकं प्रहारिणः कालकल्पा अपि संरम्भोद्धृतपादाक्षिप्तयमपाशाशनिपातना अगोघ्ना अपि गोशीर्षमविप्रा अपि यज्ञोपवीतमु(प ? द्व)हन्तो नर्तका इव बहुपाननिवर्तनबाहूपवर्तनाः, तक्षाण इव स्वस्तिकक्रियानिपुणाः सिंहनखा इव तिग्ममुखोल्लेख्यवारणा दृप्त[1] .... इव तीक्ष्णपादावलिप्तवाहनाः मृगया इव व्याघ्रानिवर्तनोद्यताः मृगाकारा इव श्यानगातयरुक्षयो मृगा इव चर्मपरिच्छादिका(?) वेलोर्मय इवाविरतास्फालनाभ्यन्तरापवर्तना मृत्युमिव दर्पयन्तः प्रावर्तन्त ।

तुरङ्गिणश्च वेणुवेत्रपटारोहदेवतारुकालचन्दनस्पन्दनासनखदिरशिंशपामयाः पञ्चषट्सप्तहस्तमात्रातुण्डं हलानि च पौष्कलानि प्रोक्षलायतकम्रजायसानिषीनजायसतीक्ष्णधाराणिषविषमदलचेतसाशोकाश्वकर्णकरवीरखर्जूरतालोपलेषुपत्रगोजिह्वाननासंस्थानानि द्विचतुष्कधुत्तरदशाङ्गुलार्घ्यङ्गुरुङ्यङ्गुरुबहूलानि व्याघ्रनखस्यन्तुक्तैर्मषिमृत्तिकयोश्च समेन चूर्णेन निर्धौतनिर्मलानि व्यक्तविविधलक्षणानि वैडूर्यमयूरकण्ठनीलोत्पलासितपुष्पकान्तिभिः प्रभाभिर्द्वितीयाकामिव निर्ममाणानि मध्वादिछायोपकरणादिवक्षसरुचि बन्धयन्ति विनिचर्मचोत्पल[2] ... न गान्धितया सन्निहितसमरलक्ष्मीपारिमलमिवोद्गिरन्ति सुरासातिवोद्वहद्भिरनुल्बणमणिरजतरूप-

1. Space for 5 letters left blank.

2. L. about 12 letters.

वलाक्षिकैः पत्रायमाननालिकैरू[1] .... पित्थामलककलशाद्यनेकबन्धकैः पञ्चाशत्-षष्टिपुलिकैः(?) स्वप्रमाणानुरूपैश्छेदनभेदनबन्धनपट्टनलेखनकृन्तनवेष्टन[2] .... रशुं तले परिगतमलातचक्रमशनिं विद्युत्क्षिप्तं नागाक्रान्तं लतावर्तं क्षोमयमथो भटमुसलं *विद्युद्दण्डमंसा*[3] *.... कुरङ्गं भुजबन्धुचाक्रान्तात्(?)* परिक्षिप्तवारणमुल्लेख्यमलेख्यं कृन्तनमवकृन्तनं यमदण्डं भिण्डिपालं बाह्विक्षेपकानुकश्रोणिपरिगतमास्फोलं बाणो[4] .... स्पृहं जा[5].... चित्रक्रियाः क्रमाद् दर्शयन्त, कारणातिशयांश्च गृध्रिचक्रं पक्षावर्तं देवदण्डं चक्रदण्डावर्तं कालदण्डं नागाक्रान्तं देवाक्रान्तं भूतभेरीं गूढभेण्डं भुजाक्रान्तं स्वस्तिकं सिंहाक्रान्तं गव्याविद्धमलातचक्रं च विरचयन्तो, मारणानिचमूलाघाता[6] .... श्चेद्यभरणं कुरङ्गवारणं स्वस्तिकवारणं विक्षिप्तवारणं ध्वजाक्रान्तवारणं रसरवर्तवारणमचलचक्रवारणं वालङ्गवारणं वारणवारणं यमदत्तवारणमसिकर्म-*वारणं पातनवारणमतिप्रनर्तो इव प्रावर्तयन् प्रकृतास्त्रकृताश्वधर्तिनो(?)* वल्गा-मेकहस्तेनावलम्ब्य श्येनं दर्वीग्रहणं जठरावर्तनं बाणोत्कर्षणं मूलोत्तरं निवर्तन-मूर्ध्वावर्तनं स्कन्धावर्तनमुल्लेख्यं वल्गुपीडितं गूढाग्रं पक्षपीडितं स्वस्तिकं लक्ष्यो-त्क्षिप्तं लतावर्तनं विक्षिप्तमिति षोडशापि व(ल्गु ? ल्गा)पर्यायान् यथावदाचरन्तः कर्कटकासक्तवर्गाः •चतुरश्रमेनिष्ठेष्वश्वेपूद्गतान्यगतानपरिगतानालोहितवीची-कृशोदानन्द्यावर्तः पक्षाश्रोणिमणिबन्धासनगण्डमस्तकस्तिनाभिहृदयस्तननलनेत्र-विषयाणिविद्यानि तावन्त्येव च प्रतिभेद्यानि सन्निपातांश्चाधिकर्मसम्पक्षिणप्वे-रूपाः षोडशैव स्वच्छातप्रकृतविच्छन्दतक्षभ्रान्तदर्शनोद्धूननं त्रिकरपसिंहनिष्पाडिता-धोमुखशार्दूलपरिसर्पणाक्रान्तकृन्तनपराक्रान्ताभिमुखपार्श्वकर्मपरावर्तनखेदग्रहणाद्ध-

1. L. about 20 letters.
2. " " 28 "
3. " " 20 "
4. L. about 5 letters.
5. Space for 7 letters left blank.
6. " " 5 "

याना योजयतश्चाप्यभागांश्चाकर्ममिश्रां सायकयौधभूषणं शस्त्रविक्रममयं(?) मन्त्रोद्धरणं वज्रावर्तनं विद्युन्मण्डलं सूचिगमनमिन्द्रवज्रं वृन्दभीषणं भूतकेन्द्रं शत्रुयातनमिति पटयन्त्रहस्तियन्त्राणि प्रतिष्ठितं प्रसार्य खड्गपातं कुन्तपातं-[1] .... मसिखेटमिति चित्रदुष्कराणि कुर्वाणाः, त्रिसंयोगविधीनप्युद्गन्तं पृष्ठानुवर्तनं हस्तोद्वर्तनं स्कन्धावसक्तमक्रमधःपृष्ठमूर्ध्वपृष्ठलावर्तनं श्रीकण्ठं संक्षिप्तकं व्यवच्छेदनञ्च प्रयुञ्जाना वञ्चनाश्च नानाविधाः परस्परमुपपादयन्तस्तटिन्मया इव समन्ततश्चेरुः( ? ) ।

द्विरदयोधिनश्च स्मृतिधृतिशक्तिशौचयुक्ताः प्रति(म?)पत्तिमन्तः प्रियदर्शनाः प्रं[2]...गोः समीक्ष्यकारिणो दक्षांचक्षुसमस्ततीर्थोषिता(?) जितश्रमाः शीलवन्तः स्थूलाक्षाः (इ)भहितैषिणो (भू?भ)यानभिज्ञाः भद्रमन्द्रमृगसङ्कीर्णानां ह्रस्वदीर्घतनुग्रीवाणामुदग्रावाग्रशिरसां स(मासत ? मांस)विषमांसाधिकांसानां च मतङ्गजानां यथानुरूपमासनेषूपनतिविनातिनिर्नतिकुण्डतापाश्रयग्रीवास्तम्भपर्यवसानानि उल्लोकमांसानात्मप्रोक्षणादिमुक्तमुक्तांसमविषमोपपन्नाभिविहङ्गमघटाजानुकर्णित(?) ....[3]सनमपिञ्छलमनुद्गतांकुशमकुटिलमप्रकम्पं समाहितश्लिष्टोरुजङ्घानुवृत्तजानवः स्थाणुभूता इव समुत्कीर्णा इव च निषण्णाः पञ्चवि ....[4] पादसंस्थस्य चतुष्षष्टिप्रविभागस्य यतस्य यथावसरं प्रयोक्तारः सर्वैरेव प्रहरणैः प्रतिभटप्राणानाचामन्तोऽनुपूर्व-[5] .... थालक्षममन्दशत . . . ।

1. Space for 3 letters left blank.
2. „ 5 „
3. L. about 5 letters.
4. L. about 16 letters.
5. „ 28 „

[1]...... न्योन्यस्योपपाद(न्तो ? यन्तौ) रोषशात्कारमुक्तिषु संवर्त-समीरमिवान्योन्यशृङ्गभङ्गहेतोरुत्सृजन्तौ संरम्भदृष्टिदहनजाते....[2] लासानिले-तरस्य रचयन्तौ रक्तदृष्टिविसर्जनेषूत्पातवलाहकानिव चापहसन्तौ रोषपावकपाका-जरूपपा(त ?)टलमदातिरेकमिव रु(ख ?)धिरच्छलादितस्ततः क्षतमुखैः क्षरन्तौ प्रनेताभिनतनिषण्णानतोह्नादिभिर्बहुविधैश्च कापिराजमार्गे( ? )रुच्चावचैश्चरण-विक्रमप्रकारैरावलितकरपुटोत्क्षेपविभ्रमैश्च मदनृत्तमिव समीकवीथ्यामाचरन्तौ वैरमयाविवातिचिरमयुध्येताम् ।

न तथा पुरुषकेसरिकरचपेटाभिपाता भयावहाः, (न तथा) महावराहपोत्र-प्रहाराः, न तथा निष्ठुराणि यममहिषविषाणकोटिताडनानि, न तथा महा-महावराहाः प्रलयानिलहतकुलभृङ्गभङ्गाः, यथा तयोर्महागजयोरैरावतरदनकर्म-कदर्थनक्षमा दर्शनप्रकाराः(?) । तौ च तयोरभिनिषादिनावुद्यतासि विद्युत्वन्ता-विवामरगिरिप्रथमधामा(ना)वराजिषातामकृषतां च ।

इतरेतरस्य शरशतशल्यशकलशल्कसञ्चयातिगचितकवचकार्कश्येषु स्थैर्य-वत्सु गात्रेष्वत्रासदृढातिगाढकरकठोरघारिणि(?) स्फुरितस्फुलिङ्गजालतया शीर्ण-कपिलकेसराणां कुपितलक्ष्मीकर्णकुवलयप्रहाराणामिवानुकारकाणि खड्गलता-ताडनानि च तदनलमहाकृपाणधारोच्चलितरुधिरशकरनिवहलोहितायमानं च तयोः शरीरमानीलमहोरगाभिघातज्वलितचलशिखाकलापकवचितस्य जनमेजय-सत्रजातवेदसोऽन्वकार्षीत् ।

अवनमय्य तु प्रतिद्विरदवदनमुद्विसरदशनकोटिरेखोल्लिखितमस्तकपिण्ड-मात्मनिकानेकमदनातुरवरवधूदत्तकण्ठग्रहस्य कण्ठग्रहं मगधराजस्य कर्तुमभि-ललाष मालवेन्द्रः ।

1. 6 folios are missing here. 2. L. about 13 letters.

तावच्च गळतापातिदूर(?)प्रविष्टदक्षिणदशमकोशकुलिशमीषत्कराळितानेन हेमकूटेन प्रतिगजमुखमुत्पीडनिपीडितोद्वृत्तरक्तपूर्णाक्षपुटमाक्षिप्य तत्प्राणाः पुनराक्षिप्यन्त । क्षिप्तश्च विपतिषोपपत्तयोव(?)घूर्णमा(ने ? न)विग्रहाद् ग्रहपतिरिव पश्चिमाद्रेः समुद्रमिव सन्ध्यारुणं रणधरणितलमसुपटलवपुरवपुप्लुवे निराज(?) ।

राजा च प्राणवेगनुन्ननानाराजोप्यऽसौ(?) संवर्तपवनपतौ पतिततुलाद्रिकल्पः पपात । प्रतिवारणावलिप्तश्च हर्षवेगद्विगुणमदप्रवाहो हेमकूटस्त्रिपदीलास्यलीलान्दो(षि ? लि)तः प्रतिमल्लपराजितप्रवृत्त इव ज्येष्ठ(म ?)मल्लो मन्द्रमन्द्राणि मगधराजसिंहनादमिश्राणि मागधानीकवीरकण्ठीरवोपबृंहितानि धीरधीरं चकार ।

तस्मिंश्च क्षणे क्षपित ....[1] वं मानसारमाकलय्याचलभक्तिप्रेरितं सकलमेव रथतुरगमतङ्गजानीकमेकं राजहंसे जिघांसभ्यवारयत् (?) । अवाहनश्च सवाहनो हन्तुमनभि(क्षां ? काङ्)क्षन् 'आरोह तावदभिमतमनुकूलमङ्ग विस्रब्धं किमपि वाहनम्' इति द्विषन्तमाभाष्य भ्रमयन्निहभवतिमतिरमसनि ....[2] तिकातराणि तदसुग्रासहानि वर्मकरं च लोकान्तरमुपरतपिशिताशिनान्यद्धृगृध्रानीचगृध्रामण्डलानि होतिखण्डनपातनविहाञ्चे स्वबाहुदण्डं मन्मथिततुरगशतसहस्रं सकलमेव संगृह्णाम धरणिमण्डलमशेक्षणहुताशेषं बभ्राम(!) ।

तस्य च न शरेण न तोमरेण न मुद्गरेण न चक्रेण न कुं ....[3] णेन न कणयेन, न दण्डेन न भिण्डिपालेन न मुत्सृज्या(?) न मुसलेन न शतघ्न्या न शक्त्या न शूलेन न पाशेन न परिघेण न परशुना न पट्टसेन न पत्रेण न प्रासेन नासिना नान्येन वा केनचिदायुधे ....[4] भूतनमेकनिकरदुरापातृप्तिनाप्यतृप्तेनाहूयत(!) ।

1. L. about 1 letter
2. Space for 6 letters left blank,
3. Space for 4 letters left blank.
4. L about 12 letters.

द्भूतदाशहशक्तिरासीदत्र निर्मासितानि तान्यलीकमापातसहस्राणि येषामागृहीत राजपुरुषकारणामुभयलोकभ्रंशमूलोपदेशं दानपिण्डितानामद्यापि च यमभियोग-भूमयो मधुरविमदनदाहोद्वेजितस्तपस्यति पात्रसन्निहितः कुसुमपादपेषु(!) काक-द्विषोऽपि चैते ....[1] त्वं द्विजत्वं चार्थयुक्तं दर्शयन्तीति प्रीयमाणमानसस्तमेव पूर्वसरं सारङ्गपोतकमनुसरन् किञ्चिदन्त(र)मनुपसृत्यातिमहति महीशिखण्डरव इव कुसुमचन्द्रकस्त ........[2] देशमृतलवकालिकळवशवस्यन्दविसृतलग्ना विकिरति मधुशीकरवर्षबिन्दुसन्ततिरुाचिरधौतवल्कमदम्भपूषितगर्भपर्यन्तपल्लवपुटे मुनिवृन्दा-रकवृन्दसन्दर्शित ....[3] निकरदर्पे तुराङ्गलाविवोल्लसत्युदग्रतपःस्पृहयेव पीतसकल-वासरोष्ठमणिमुष्करबीजाक्षवलय इव षट्चरणचक्रं जपश्रद्धया साभिलाषं परिवर्त-यति(!) प ...[4] माधवीलतामण्टपे तदुपस्तम्भसाधारणाधिकारस्य नातिमहतो नाग-पोतस्य स्कन्धोपाश्रयेण श्लक्ष्णवेदिकाप्रतिष्ठापिते प्रतिष्ठित(ष्णो?कृष्ण) जिनास्तर-वेत्रविणेत्रविष्टरे समुपविष्टमह्नाय वसायवि ताध्यात्मविद्या(ध्या?व्या)ख्यानविरतघोषं (!) पीयूषदानावसानविश्रान्तधीरध्वनिमिव दुग्धजलधिमालोकातिशयलाभकृष्टरन-वमरसमाविर्तैरुत्कण्टकमूर्तिभिरुपजातप्रबोधैः पुण्डरीकैरि(व) सवितारमुन्मुखैर्मुनि-भिरभि(हन्य?वन्द्य)मानमि(न्द्र?न्दु)मृगमिवाचिरपीतप्राकृतामृतमन्दतृष्णं विद्यामृत-मन्दतृष्णं विद्यामृतपा(लनवा?नला)लसागतमतिविश्वासादशंकाश्लिष्टशरीरमाश्रम-कुरङ्ग(शल?शाव)कमार्द्रकराभिमर्शनेन वी(ज?त)रा(ज?ग)तया सदयमनुगृह्णन्तं तपस इव चरणलग्नस्य दुग्धकामस्य कस्यापि हंसपोतस्य नखप्रभाप्रसरपानव्यसनः बिसभङ्गरसान्तिसन्तर्जनादवनयन्नतापसकुमारकामनाप्रश्नोद्ग्राहणं जितकाशिने शुक पोतकाय प्रोत्साहार्हणं स्वकरेणैव क(शो?ठो)र(सा?डा)डिमीफलस्फुटितगर्भनिकृ-

1. L about 10 lettees
2. „ 14 „
3. L about 16 letters
4. „ 8 „

षित(?)स्फाटिकजातिप्रकाशैर्बीजशकलैरासन्नतरुपलाशपुटपात्रीसंहृतैरुपहरन्तं, प्रण-तिविशीर्णवर्णिव्रजशिखापिशङ्गिमानमिवाश्रमाङ्गणबलिकुसुमपुटधूलिं चरणपृष्ठलग्न-मनुबध्नन्त्यादर्शनदोहळीकसकलतीर्थप्रेषितया यमु(न?नये)व भ्रमरमालयोपास्यमानम् आलोहितधौतवल्कलनिवसनोत्तरीयम्, उपस्थितप्रसन्नमित्रालिङ्गनलम्भेन बालातपेनेव तिरोहिताङ्गं, तीर्थजलावसेकलोभात् त्वचमिवावकृष्य निष्पतद्भिरस्थिभिस्तपसा कृशेष्ववयवेषु विषमीकृतमन्तश्शुचिमा(से?नस)प्रवेशमार्गान्वेषि(णा?ण्या) कृतपरि-क्षेप(रिक्षेप?)या हंसमालये(द्?)व ब्रह्मसूत्रलखया पवित्रीकृतशरीरं निशित(त?)-कुशपूलपालिलेखनाकि(र?)णश्यामलतलतेलोदरण रुद्राक्षवलयपरिवर्तनकर्कशाङ्गुलि-पर्वकाण्डेनाहुतिरागसान्निहितक्रान्तहुताशधूमोद्गारदुर्दिनेनेव सर्वभूताभयदानोदक-मिव नखमणिमरीचिधारानिभेनावर्जयता सर्वदेवतामदविकारमनोज्ञापनगोष्ठीधनमधु-दण्डेन दक्षिणकरेण च निर्मलजलकुसुमभीकाकण्ठग्रहणकामुकेन भ्राजमानं, सर्व-सिन्नेवमार्दमये महर्षीणां संशयान् सु(नि)श्चितार्थतया न नो वा विसर्गेण(छ?छि)-न्दन्तं, दीधितिभिश्च तद्विसर्पिणीभिः पर्वतप्रहतमार्गवमार्गणमार्गनिर्गमप्रचल-जालमालानुकारिणीभिरतिशीतलचन्दनद्रवनदीमिव(?) सर्वेन्द्रियवलयवेलोद्वेलापूर्व-क्षीरोदलेखामिवोत्फुल्लसरस्वतीविहारसिन्दुवारवीथीमिव धर्मिसोमाभिवृद्धिशुक्लशर्व-(दु?)रीमिव स्वच्छमानसरसभरपूरितोड्डीनशारदाभ्रमालामिव दर्शयन्तं, दशन-ज्योत्स्नापयःपूतेनेव पलितपाण्डुना सर्वशास्त्रामृतमथनोद्भूतफेनपिण्डकल्पेन कूर्च-क(पोल?लापे)न शिरःपर्यन्तवान्तगङ्गास्रोतसं शर्वमिवानुकुर्वन्तं, जपगतकलालप्रवा-हातरावर्तमिव गण्डगर्तमभ्रमिबे ....[1] रुध्यमानदाष्टिद्युतिप्रलोपोपचनीमिवोन्नति-नासिकां दिवसकरतेजःप्रसरपानादिवातिदिवयोरप्युपोढकारण्यतया तपोवनतर-....[2] सोमसम्भूतां सुधादृष्टिमिवाभिवर्षतो ध्यानानन्दासमिव तपोवनानां सं-

1. L about 10 letters
2. „ 12 „

विभजतो मानसातिरिक्तमैत्रीरसपरिवाहप्रणाळ्यो स[1] .... तरग्निहोत्रावसान- दत्तभस्मत्र्यायुषरेखमृषिचक्रवर्ति चक्रोर्णलाञ्छितमिव समाधानसाधितभ्रूद्वया- (न ?)न्तरानिश्चलस्थितिं नामने सैव स्वच्छ[2] .... सरस्वतीलीलाष्टपदायमान- मुपहतां सर्वविद्याकोशनिधिकलशेन लपनेनोपेतमप्यर्थभङ्गुराभिः सोभामिनीभि- रिव घनागममधुकपिळशालिका[3] .... प्लुतिदूतमूर्तिभिरसमुरं वीरागः वर्धनीभि- रिव सकलकलिकाभिरिवाशोकमनीयमगाढाश्लेषश्रवणमूलचित्राभिसन्ध्याभ्रलेखाभि- रिव दोषामुखमायामिनीभिः[4] . . . रुद्रासमानसुराभवकरुणकलिशमप्यामुती बल- मसकृदाचरितमेकदापारितकेदारवानमप्यकृषीवलमखिलभुवनभावेनोन्मुखप्रधानमप्य- रजस्वलम(सा ? सं)स्थानमपि(!) परिषद्बलं सर्वपथीनमपि कृष्णवर्त्मैकशरणमनवरत- भ्रामिताक्षवलयमपि प्रशान्तेन्द्रियं गुणशतसन्तानतत्परमप्यातततन्तुमिष्टवर- प्रदमपि सरस्वत्येकवल्लभं तपस्यादिनमपि समहिमोदयमतिचिरायुषं दृष्टानेक- (म ?)परिच्छन्दानुवर्तिनमात्मभावावलम्बनैकरसमत्युच्छ्रितमुच्चैर्मुखं ब्रह्मलोकप्रती- क्ष्यमादिमुनिमभ्यस्तपुष्करवासमनङ्गीकृतमकरकेतनं वामदेव इति प्रकाश- पुण्यश(ब्दः ? ब्दं) तपोराशिं ददर्श ।

दृष्ट्वैव तपःप्रभावाभिभूतप्रागल्भ्यो भी(इ)त इव किञ्चिदाबद्धहृदयसाध्वसो मनसा वपुषा च समं सङ्कुचितः प्रयत्नापसर्पणीयाः पुण्यभूमय इत्यादरादिवा- ञ्जलिजलजपुटावर्जिताभिर्नखांशुजालवेणिकाभिरभिषिच्यमानमौलिरदृष्टपूर्वातिथिता- कारान्तरितकुतूहलतिरेकायास्तस्यान्ता(व ? प)स्परिषदो युगपदावलितहर्षलोल- लोचनसहस्राधिरूढस्तदतिभरेणेव दूरावनतमूर्तिर्मज्जन्निव महति पुण्यह्रदे प्रहृष्टरोमा धर्मनिघ्नमनस्कारान्ननमस्कारमाचचार ।

1. L about 16 letters  3. L about 14 letters
2. „ 20 „  4. „ 14 „

आचरितमहर्षिचरणवन्दनं च शिरश्चरितार्थमिव सकलत्रिभुवनाधिपत्य-चिह्नचूडालाञ्छितमिव बहु(पु?)मन्यमाने महीपतौ स मुनिराकपिलतारके-णांशुमन्तमिव सन्ध्याकाशे तमनुरञ्जयन्नरुणकराग्रसंहा(र)मुकुलितकमलकोम-लाञ्जलिपुटमधोमुखं निपतन्त(मि?म)तिप्रसारितेन चक्षुषा पुनःपुनरभिनिरूप्य समुत्पन्नाभिज्ञः संपृष्टाव(?) समस्तमेव हस्ततलामलकमिव तद्गतमुपजननात् प्रभृत्यु-दन्तम्। उल्लसदानन्दजललवग्रथितपक्ष्मालः सु(न्धि ? धी)रोऽपि सुदूरोत्सृष्टलोक-यात्रारसोऽपि सुतस्नेहवृत्तिरपि सुतप्ततपःपिण्डवीतसंभ्रमसंसारसङ्गभङ्गो निजाम्योऽपि किमपि स(म्प्र?म्भ्र)मस्पृष्ट इव मुक्तविष्टरः कतिपयानि पदान्यसङ्गलन्दरुण-वल्लरीरोत्तरीयो(?) गत्वा निर्मोकलवानुबद्धजरदुरगनिभौ जराधवलरो(म)जालौ भुजौ प्रसार्य सु(त?त)वद(ल?व)निपालमतिदुर्भरसंभावनानिपीडितकरमालिङ्गच्य क्रमेण चानामयपरिप्रश्नादिकमादिष्टक्रियातिक्रमणभीरुभूपलब्धावकाशमाशृङ्खलप्रहर्षो मह-र्षिर्मधुमन्मत्रसाधितमधुपर्कदानावसानं (रि ? वि)धिमहितमन्वतिष्ठत् ।

उपविष्टे च तदुपदिष्टे स्थाने तदनुग्रहातिभूमिगमनयन्त्रणापरतन्त्र-मनसि पार्थिवे तमदृष्टपूर्वमादरातिशयमाश्चर्यभूतं महामुनेरुपलभ्य सवेसमा(?) मुनिसभा कोऽन्वयः किमभिजनः किन्नाम किलायं, (कि)मनेन जन्मान्तरे तपश्चरितं, केन वा प्रयोजनेना(प?य)मेनां भुवमपि सङ्क्रान्तः, कथं वास्य महानु-भावस्य परिमितपरिवारता । तथा चेदमपरमत्याश्चर्यम् , अस्य किल महात्मन-स्तिलमात्रमपि नोपलक्ष्यते शरीरावयवेषु यदनामुक्तमग्राम्यैर्व्रणकिणाभरणैः । कथमदेवासुरमतारकामयं वा रणमुपेत(म ? स्यै)तादृशः प्रहारविमर्दसम्भवः । सम्भवे वा कथमिवैवमनेकशतशस्त्रमार्गजर्जरितेषु गात्रेष्वक्षरितवतामसू-नामवस्थानमासीत् । अत्युत्प[1] ........ हलबलात्कृतापि गुरुयन्त्रणया गरीय-स्यानुयो(त ? क्तु)मपारयन्त्यतिष्ठत् ।

1. L about 10 letters

तथा स्थितां च ऋषिरिष(दु ? दमु)पनिध्याय स मुनिरीषत्स्मितः सोमान्वयश्रवणकौतुकाज्ये[1] ..... दशनभासा स्नपयन्निव पञ्चतपस्तापदत्तपनातपप्लेपपाट(ल)लाटप(ट्टन?ट्टा)नि मुखानि हन्त! वो (वे?वि)दिताकूतयः कौतुकिन्यो मनोवृत्तयः। स्थान[2] .... कुतूहलमाकर्ण्यतामस्य कल्याणराशेराशामुखललामभूतं चरितमन्वयारम्भादारम्याद्भुतरसमाक्षिप्तचेतसा म(यो?या) गीयमानमित्युपचक्रमे क्रमेण[3] ....... नुभावातिरेकोद्वहा महान् सरोविहारशीलो हिरण्मयाण्डयोरातायमानदेवदानवोभयकर्परो मुखपटक्षदक्षरमधुरत्रयीरुतिराजोहंसः(?)। तस्माद् विस्मापितात्रिविष्टपस्त[4] .... भुवनकिल्बिषो[5] .... वनदात्रिरत्रिने(त्रे?त्राद)नन्यजस्य नित्यमित्रमम्ब(रा?र)प्रयानम्बुजानामरातिरम्बरौकसां जीवितमम्बरश्रियः स्थितत(?)स्मितमग्निकापतेश्चूडामणिः कौस्तुभस्य सहोदरः क्षत्रवंशस्य पूर्वो देवतानां पतिरोषधीनामीश्वरमज[6] ....रवदवधे प्रसाधनं शस्मर्यवलक्षः कुमुदकुड्मलदलनदुर्ललितकरकामयमयानकामिनीकपोलादर्शतारस्तारापतिः(?)। तस्य तन्तुम्तारायामाङ्गिरसवल्लभायामभूद्बोधाधरितधिषणो मेधानिधिः प्रधानविबुधो बुधः। बुधादिला पूरूरवसमंशे मित्रावरुणयोरध्वरे मनोरुत्पन्नो(रू?द)पादयत्। इलावृतं नाम यद्वरणभूमिं परितो हिरण्यगर्भोपमयमद्रीमद्यापि वर्तते जाम्बूनदजन्मजाम्बवरसवाहिजम्बुनदीपानवर्धितजानपदवर्षवर्षम्(?)। ऐलादायुरजनि जनार्दनोरुन्मन्दारमञ्जर्या महेन्द्रदादकीयानां वेदिकाना(?)माग्रिमायां गन्धर्वीमुर्वश्याम्। आयुषोऽष्टगुणैश्वर्यजितत्रिविष्टपेश्वरो नहुषः स्वर्भानुदुहितरि स्फुरत्प्रभायां प्रभायामुद्बभूव। नहुषनन्दनो नन्दनवनविभ्राजप्रमुखाविश्वदिव्यवन-

1. L. about 16 letters
2. „ 20 „
3. „ 10 „
4. L. about 2 letters
5. „ 4 „
6 Space for 6 letters left blank

भुक्तिविश्राचीमरविन्दगण्डूषमधुमण्डखण्डपरशुविश्राणि(त)रथवरषट्सहस्रमात्रभ्रमणसाधितदानवमण्डलस्तानि निर्वेदकामोपदेशायमानगीतिः कामदेवो ययातिः(?)। ययातेरजायत राजन्यवृषभो वृषपर्वदुहितरि शर्मिष्ठायां मित्रसुरतशापदानविधुरजनकजराजालकञ्चुकच्छन्नयौवनोऽपि रुचिराचारु(पूरुः)(?)। (पुरूःपुरोः) पविरिवारिपर्वतानां पौरजानपदरञ्जनो जनमेजयः। तस्य सु(तो) नय(श्च?च)क्षुः प्राचीजयचिह्निताकः प्राचिन्वान्। प्राचिन्वतः पृथुजाततप्रथनकृतशकालब्धप्रथितकरवीरः(?) प्र(व?वी)रः। विक्रमदमितधर्मलोपनिर्मर्यादो दामदन्धरं(?) नमस्युर्नाम[1]। अस्य च दिवौकसामभयदोऽभू(द)भयदः। तदायनिरात्मतेजोवधूतशुद्ध्यां(?) शुन्ध्युः। कस्य तनु(?) बहुविधनयावधानो बहुविधः। बाहुविधिरधिबाहुनिहितभूमिभारो भीमहेतिः संशयातिः[2]। तस्य महद्(?) अ(मःप?हंपा)तिस्तदपत्यमत्यादित्यतेजास्तदनन्तरं प्रत्यपद्यत। तत्पुरस्तात् पुत्रिणामतृणमस्थापयत्(?) प्रस्थापितसत्पथः प्रतिपक्षरौद्रो रुद्राश्वः। स घृताच्यां स्थाल्यामिव कुलप्रदीप(दु?मुद्)पादयदुग्रतेज(सा?)सं दशानामग्रम्। (स) रणे रिपुभटभ्रुकुटिबन्धान्धकारधूननज्वल(य?)नायां तक्षकात्मजायामजीजनदनन्तसारमन्तिनारम्। आन्तिनाराद्रिकुलकाननकदनदावा(न)लमिलि(ला?लं ले)भे यमसुता सुतम्। त्रस्तवानत्रस्तवानादस्तमानमादरे मकुटपाटलोष्णीषायमानपद्मद्युतिरवितथप्रसादनकोपितस्तत्तनयस्तत्र भुजंशभोगगभूरिणा भुजेन जपमन्युभुवं भुजेः(?)[3] तदुद्भवानां महार्णवानामिव चतुर्णां पूर्वो बृहत्क्षत्र इत्यनुत्तरस्थितिमपश्चिमानमवाचीनवृत्ति(?)रनुकूलस्थितिर्महेन्द्रश्रियमानशे। तस्य भरमुवाइ स्ववग्रहो हरेरिवैरावतः कल्याणसम्भेटकरः कलितपुष्करा(न)नो ह(स्तिनं?स्ती) नाम, यन्नामलाञ्छितं शूराणां राजधानी धरा-

1. The printed edition of the Avantisundarikathasara (edited by Sri S. K. Ramanathasastri) reads मनस्यु, page, 17. But a palm leaf manuscript of Kathasara in the T. V. M. Ms. Library, (No. C. O. 1688) reads नमस्यु. 2. Kathasara reads शर्याति.

3. According to Kathasara the order of the Kings is as follows :— इलिलः, दुष्यन्तः, भरतः, वितथः, भुमन्युः, बृहत्क्षत्र.

लब्धाम नगरम् । अजमीढ इति द्वि(ज)मीढपुरमीढयोरग्रजन्मा जगन्मकमलवज-समालङ्कृतविभ्रमयशा(?) दिशाम्पतिरभवत्। अमुष्य पत्नी धौरिव तरलतारकाभ्ररामां धूलिनी[1] जनयामास राजमण्डलयोगहृद्यम् ऋक्षम् । ऋक्षा(द)क्षतप्रतापस्तपन-कन्यकया (स?त,सतपसा पुनरनन्ततमया तपत्या कृतसंवरणः संवर(णात् ? णः) संवरणात् प्रकृष्टसत्त्वः सत्त्वरक्षणदीर्घसरी ....[2] गुणगुरुकुरुकुलाङ्कुरकुलगिरिकुञ्ज-केसरित्रासकरघोरघोरहुङ्कारचारुधन्वा(?) सुधन्वनः । (सुतस्तु?तत्सु)तो महद्भि-रहितमहीपालविग्रहाविप....[3]सकलजगत्कण्टकविषमशल्योद्धरणवैद्यश्चैद्यः । ततश्च-तुरन्त(र?)धरणिदारः सन्तुष्टकृती कृतकः । तस्मादपर इव सुरपतिरपि ....[4]चिवेलं पुञ्जित....[5]शुक्तिजालजर्जरझर्झरायितपतितबहद्दशो(?) बृहद्रथः । तत्तेजःपरिणामः परिमाणमिव बाहुशालितायाः कुशाग्रधीः कुशाग्रः....[6]दृषभः । तस्मादशेषविश्वभूत-तासितस्वकीर्तिपुष्पः पुष्पवान् । (पौष्पवता?पुष्पवतो) बाष्पगर्भविपक्षनारीक्षणसर-स्तरदुरुमवाप(स?स्त)सतपनीयपत्रचित्रधन्वा सुधन्वा ....[7] जागरूक : प्रकाशगर्वो दर्वः । (ग?द)र्वसुतः सदामोदरदर्पसम्मददोहळीहयधरतलघर्षणक्रिणितकण्ठः कराग्र-नगरगभ्यतन्त्रिककुलकुटुम्बीकृतचरणझणझणायमानलोहशृङ्खलः(?) सकलक्षत्र ....[8] नचतुरजरो पचारपुत्रः सत्यसन्धो (राज ? जरा)सन्धः। तस्य सुतः पितुरपरिहीण-प्रभावो भारतरणार्णवावगाहनसहः स(ह)देवः । सहदेवात् सहसुरसपपीतसोमसो-माधी(?) सोमापी । तत्सुतः स्वापदानविश्रुतः श्रुतश्रवाः। श्रोत्रश्रवसश्चक्षुश्रवा कायकर्कशा(?)(यतोय ? ऽयुतायुः) । ततः शिवसत्क्रियाप्रवर्तनप्रविष्टमित्रहृदयो

1. Matsyapurana reads धूमिनी.
2. L about 10 letters
3. „ 14 „
4, 5. The two lacunæ cover about 32 letters
6. L about 22 letters
7. „ 14 „
8. 8

**निरमित्रः** । तस्मात् स्वभुजभुक्तसमस्तचक्रवर्तिक्षेत्रः (सुक्षेत्रः)। सुक्षेत्रात् सौक्षेत्रिर्मक्षात्रपथप्रगुणितगुरुजगत्कर्मा(?) (बृहत्कर्मा) । तस्माद्भवादिवामृतकलावतो महासेनः सेनजिन्नामाजनि। स पुत्री ध्वस्तसमस्तशत्रुणा शत्रुञ्जयेन ज(यं?)ज्ञे[1]। शत्रुंजयादजायत यथार्थनामा विभु(ः) । वैभवो भव इव भूतभावनोपाङ्गगमनः शुचिः । शुचेरन्वगभ्रकाल इव घनावलम्बनो भुवनमाह्लादयन्नखिलादिगङ्गनोपरासक्तीभूतकीर्तिक्षेमः क्षेम्यः । तस्य पुत्रः पूतजनता(च?)जप्यवृत्तः सुवृत्तः । सुवृत्तादर्कमण्डलादिवालोकः प्रावर्तत प्रजानेत्रभूतो नेत्रः । नेत्रजन्मा त्रिनेत्रकोपानलकदर्थितकामरूपसदृशः सुनृपः । सुनृपात् सुरापन्नजनदयनपालितश्रुतः(?) सुश्रुतः । सौश्रुतिराश्रितश्रुतिकाश्यपीश्वरपरिदृढो दृढसेनः । तत्तनयस्तामरसनयनो नयनः । नयनान्नयत्रिशदमतिः सुमतिः । सुमतेः स्वभुजबलतुलितबलः सुबलः । सौबलिरबलाधरराग़रक्तनेत्रः सुनेत्रः । तस्य पुत्रो लपनलालितकलिकालकालनत्रस्तसत्यः सत्यजित् । सत्यजितोजिनामा विश्वजितविश्वो(?) विश्वजित् । विश्वजितः क्रतोरिव सर्वदक्षिणात् साक्षादिव भगवान् धर्मः स्वमात्मानमलभत महात्मा चरिताधरितसञ्जयो रिपुञ्जयः । तेन चक्षु(ष्मा?ष्मता) (न) कश्चिदपिन्मुखमपश्यत् । तेन नायकेन (न) कश्चिदपथमनुपदसुलभस्खलितमवगाहत । तेन भर्त्रा न कश्चिदसुभरेण कुटुम्बभारेणापीड्यत। तेन (क?गु)रुणा न (किञ्चि?कश्चि)दविनयस्य सर्वापायपारमैश्वर्यसाधनोपायस्य स्वप्नेऽप्यवकाशमदिशत्। तेन खलु बलमदः कुलमदो विद्यामदः श्रीमदो रूपमद इत्यनेकमुखानतिकटुप्रवाहान्मदा(न्) मुञ्चतातिस्रोतोमदमुचः कदर्थिता इव गन्धकरिणः ।

स कदाचिदालोचितपुराणसंहितो बृहद्रथकुलावसानमात्मानं समुपलभ्य दग्ध इव मनसि ध्वस्त इव यशसि ग्रस्त इव वैवर्ण्येन लुप्त इव दौर्मनस्येन लिप्त इव लाघवेन व्याप्त इव विषादेन सुप्त इव शून्य(यो?तया) मुक्तशोकशूत्कृतिः किंकर्तव्यतामूढो रूपविश्वासतया मदुपकण्ठमागत्य त(म?प)सि विश्रमधृतिहेतुं

1, Kathasara reads रिपुञ्जय.

व्यमृरत(?)। विवृतविश्वतन्त्राणामकृत्रिमाणां वाचामाप्तगीतानां चा(ङ्गमाङ्गि?गमगि)-रामनुग्रहादादरागतप्रतिभेन मयैव सोऽनुप्रबोधितोऽभूत्।

भगवति खलु तपश्चर्या भाविनमत्यर्थमन्यथालं परिवर्तयितुम्। इयं हि पुंसामप्रसवजरायुजालजङ्गमालाजननि बह्वायासग्रथितग्राम्यभोगक्षणसुखाभासास्वादव्यानदुश्लाघोजिता जाया वैततेनपेक्ष्यकार्यकरपरिजनशिलानुप्रत्यनायत्तं विश्वासभूमिमित्रमभिराध्यहृदयो हितकारी गुरुरास्तेऽनादिरक्षं क्लेशमभिप्रेत-साधनं धनममूलकर्म कर्मलताविजितसर्वसत्त्ववशीकरणमवैरस्यजनितम ....[1] तारं सर्वरोगहरं महौषधं षाड्गुण्यचितापापजागरमसाधारणगौरवाधिरोहण-माधिपत्यमस्याश्चर्यसाधनं न दुरधिगमदुरुपचारमिहतुरगरथ ....[2] फलमूलतृणोलपादिसाधनं तपस्यायाः(?)। तस्यामुपहितबहुप्रकारोपप्रलोभनाः परस्परोपघातिनो निषिद्धामतिकाकृत....[3]चाराः सचिवधू(र्ता?र्ताः) कर्तव्यानामुप(वे?दे)ष्टारः। किन्तु निसर्गसरळा निरभिलाषकालुष्या निर्मत्सरा निरस्तनास्तिकयवा(र्दा?दा) निर्व्याज-शुचयः श्रोत्रमापू ....[4] साधनया। पश्य फलसम्पदं तपश्चर्यायाः। यदिमौ सूर्याचन्द्रमसाविन्द्रयमवरुणद्रवि(गु?)णपा(न?)लव(सुखो?सवो)ऽश्विनौ श्वसनः शोचिष्केश ....[5] नाद्भुतेन दिवि महिम्ना महीयन्ते। यच्च सप्तर्षिप्रमु(खयो?खा) महर्षयो दैवतान्यपि प्रभावेणाभिभूय वर्तन्ते तर्वा(?) च। यदपि सिद्धगन्धर्वविद्या-धरसुरपन्नगेन्द्रादयो यथा .......[6] च्यन्ते सुखानि तदपि किञ्चित्तपस्याभङ्गि-

1. L. about 6 letters.
2. „ 15 „
3. „ 20 „
4. , 30 „
5. L. about 20 letters.
6. „ 16 „

विलसितमेव । मातापि तावत्तप्यमाना मानवाय कुप्यति प्रसीद(ति) नितरां तपस्या । किं बहुना । नैवंविधमपरमस्ति सर्वकर्मणाम्, अथवास्याम-[1]
.... मलमस्मदुद्गीर्णयारारोप्य(?) । ननु भगवन्त एव मुकुन्दचन्द्रापीडारविन्दजा जगदङ्कुरबीजमुष्टयोऽपि नाप्यवाप्येनावाप्यजीजनकृतटाकमण्डलुद्वहाः सबहु-मानमेनामुपासीनाः प्रथयन्ति प्रभावमस्या ना[2] ... किल क्लेशभयादवतर-न्निमानमानमानजवा ननु मन्तव्यमग्रामवासिने वनकामस्य यादृगायास-परिस्पन्दस्तस्य शततमीमपि कलामरण्यवासिनः तपस्यामस्यपरिवेदा भवन्ति नेति कृष्टवन्तः कृषिमिव गृहे गृहिणो यादृशा हृदयसञ्चारोन्माथास्तांश्च कृच्छ्रचर्यादुःखानि च धारयितुल्वालश्याम किं गरीय इति(?) । राजसदस्य-सम्प्रलापनिबद्धैरायस्यमानस्य मनस्विनो यथोपपद्यते सर्वाङ्गीणः सन्ताप-चिन्तयनस्यशोऽपि यदि भवति पञ्चाग्निमध्यस्थायिनः स्वजनाश्रुजलादिना नातङ्कस्थानजानि यथा न तथा शङ्के शिशिरनिरवकाशागमशीतलनिशा-(ति ? शि)लाशकलशयनशायिनं शरीरिणमासारवर्षबन्धिनी महिमजलानि क्लेदयन्तीति(?) ।

ननु चेदमेव पर्याप्तमानारण्यवासे यदिह भुज्यते स्वच्छाशाया शुचिपयोधराभिरनुद्योन सर्वे[3] .... क्षकलुषभावास्तदन्यस्त योषितसुखच्छाया स्वादु-फलदानशीलाः सुरभयश्च भूरुहाः सेव्यन्ते न सन्तापदायितानोयासपरम्परा-भ्यर्थनीयकरफलमलिनवृत्ता महीभुजः(?) । निष्कपटपरिचयाः सुलभविस्रम्भ-शीलस्वभावासिनो मृगा न स्वार्थरागनिगीर्णस्नेहावकीर्णपरिचितयो दुर्विश्वास-

1. L about 2 letters
2. Space for 5 letters left blank.
3. „ 5 „

निष्ठुरप्रकृतयो म्रा बन्धुगन्धिनः तदिदममृतमौषधं च तव चरणमास्थाये-दम्यहृत्यभिदूरेण साधिना साधयता तत्साधनीयमर्थम्(!)। अमुष्मिंश्च सोमसुता-तटोद्देशे वन्यायतनवासी धन्यैर्मुनिभिरन्वास्यमानः पुलिनलग्नशङ्खशकचिह्नितपदः परमेष्ठी सन्निहितवैन्यवाहिनो भगवानमुमापन्नशरणमसुरवरकरणकदनपरममर-मुनिमनुजे मरुदुदकाग्निवनहनगगनमयतनुमतनुतनुमलघुमलघुमचरमचरमपरं पर-महीश्वयनमनुप्रपन्नस्य कृतप्रसादास्थितानामवाप्तिरित्यभिहिते(!) मयासौ भव्य-त्वादात्मनश्च बहुश्रुत्यात्मप्रत्यया(घ ! ष)उदहरेव विहाय राजचिह्नानि मुनि-चिह्नानि जग्राह।

तथाहि— मुक्तवेष्टने मूर्ध्नि तपःप्रथमाङ्कुरानिव रागमुचः कपर्दा-नाबबन्ध। मन्दीकृ(ते ! त)खड्गकार्मुकस्पर्शरसेन पाणिना प्रशम(म !)सम्भवाण्ड-मिव कमण्डलु (प)स्पर्श। प्रवरांशुकपरिधानव्यसनविरतिप्रकृतिस्थे मध्यभागे राज्यमलदहनलग्नमग्निमिव तारथमालोहितं वल्कलमासस(जे!ञ्ज)। मुन्यैश्च(!) वन्यैरन्याशननिराशस्तनुं तनूच(कुः ! कार)।

तथाहि— किञ्चित्कालमनतिकाललब्धैरलुब्धिवदोषोऽपि तुषैरेव स तुतोष(!)। (का ! कि)ञ्चित् कालं कालकालान्तरितवृत्तिर्मूलफलपत्रपुष्पशाक-शैवलमुखैरलम्पकैरवर्त(न्त ! त)। पुनरामान्येवाचचाम। तत्राप्यग्रवाली प्रति-विकुट्टान्तरुणं चाग्राण्येवाग्रणीणिरुग्रतपसा मग्रभीत अश्मकुट्टप्रवेतव्रतिष्ठजन-साराादिकरणश्चारावान्मु[1] ......मृदितमेवाकिञ्चित्कालांशनमाशानिसर्गदान्तश्च(!) दन्तैरेव दन्तोलूख(लि ! ली) केवलमुलूखलस्य कर्म निर्ममे। निर्ममश्चार्दिहा-भारीं दिशमेका कृताग्निहोत्र[2] .... न चेदुपोवासदृगचारी प्रतिचग्रतो मृगत्वचा

1. L about 12 letters.
2, ,, 18 ,,

मृगैः समं मृगसमपातश्चचार(?) । कियन्तमिव च समयं प्रवृत्तः प्रवृत्तानि प[1] ... वर्णे पारणामकल्पयत् । अप एवाल्पीयसीः पपौ । पवनमेव पावनं पपौ । वनकरिभग्नशुष्कशाखं कूटसन्धुक्षणानामाशुशु[2] .... शिखाशतोत्तप्तकृश-शरीरास्फालप्रथितशूकराफेनिलशीकरः शिश्ये शिशिहिमहज्जलवपुञ्जसम-तीकुमुपलशाद्वलभज[3] .... गळदमलहिमजललवलुळितमस्तकस्तस्थौ(?) । सूची-पलकश्च सूचितशलल्लीकृतपलकापाश्रयः शर्वरीर्वरसमाधिराधिशून्यमासाञ्चक्रे कुरुसकरणधूमपल्लवानाकूशिराः श्रेणिव[4] .......... मुग्ना(?) यद्यदागमेषु इष्टमिष्टसन्तति तद्व्रतमहीनमन्वतिष्ठत् । सर्वमिव सर्वमिदं कृतपृथुपृथिवी-प्रदक्षिणः दक्षिणदत्तन्मनोदुरितश्च परिसमापिततीर्थयात्राकृत्यो नरन[5] ........ सपुण्ये बदर्याश्रमे वर्षपूगानुषित्वा पुनरिमां तपोवनभुवमभ्यापन्नो मुनि-ज(न)मुखादश्रृणवम् (?) ।

अमुष्मिन्नेव समये तस्य राजर्षेरव(ति?नि)मज्ज(ज?)नगगनगाहनजल[6] .... क्रमणादयो भुवनविस्मयनीया अभिमानाः प्रादुरासन् । भगवानप्यनन्तशायी निरतिशयभरितभक्ति(भू? पू)ताभिर्भूयसीभिः सपर्याभिरभिराधितः प्रादुर्भूयाभ्र-श्यामलेन करतलकमलकलितकम्बुचक्रेणाम्बुजेक्षणेन त्रिभुवनविसर्गसंहारप्रति-हारिकेण वपुषा विष्णुरेनम(न्व)ग्रहीत् स्वप्ने । वत्स! रिपुञ्जय! जितं त्वया। पराजैष्ट नियतिः । अयमस्मि कृष्टस्त्वष्टृसन्तष्ट(?)सूर्यवर्च(सच? सं चा)-भ्यर्च्यमुर्वीभुजामामर्दकनिर्दयविमर्दवर्धितप्रभावं भुवोऽस्याः कुण्ठीकृतकु(श?)ल-

1. L. about 34 letters.
2. „ 34 „
3. „ 20 „
4. L. about 16 letters.
5. „ 6 „
6. „ 2 „

शैलचक्रायाः परिग्रहीतारं तनयमेकं राजहंसं मत्प्रसादादवाप्नोषि । अतः स्वयं प्रभूय प्रद्युम्नसाम्बौ मन्त्रियोगावलम्बिनौ खलकलिकल्मषसम्भवमसुरवर्गगरशरस्तम्बमम्बुपानपरुषयासिधारयावलूय विलसिष्यतो निषेविष्यते दिव्याश्रयः(?) शिथिलय तपसि निर्बन्धमित्यन्तर्धानमकरोत् । उपस्थितं च ग्रामनया मनोरथसमृद्ध्या सखा (इम?मम)रिपुञ्जयः समभ्यनन्दयत् । उपगम्य च मगधानुत्पाद्य चैनं दीर्घायुषमसिंश्च वंशे धौरेये धुरन्धराय पुनरप्यमुष्मिन्नेव तन्नाम्ना रिपुञ्जयाश्रम इति कृतलक्षणे कुशमिशम्मणि(?) धर्मारण्ये ध(र्मचा?र्माच)रणेनाचरितमनोरथो रथचरणायुधस्य चरणमूले वासमल(ग?भ)त । सोऽप्ययं सुजन्मा राजहंसो राजयु(द्वो?ध्वा) राजकृत्वा चोवनत्राणामस्तुत्यश्च(?) सत्योद्यानवचैः सद्भिराहत्यमद्याध्यारोपयत् प्रतापनृपलक्ष्मीम् । अमुष्य योनिजदोषोरनीतिदोषं सुनीति जगदनैषी अद्याप्यनेकमृग इव दक्षिणेद्धर्माधर्मं कलिकटाक्षितः क्षतो रक्षितो(?) । रक्षितर्यमुष्मिन्न(लो?लेशो)पि लोभस्य लवोऽपि लाघवस्य क(र्णि?णि)कापि का(वर्ण्य?र्पण्य)स्य ख(ण्ड्य?ण्ड)मपि दण्डकायाः क्षोदोऽपि क्षुद्रभावस्य शकलम(प्य)कुशलस्य रजोऽपि रा(जइ?ज्य)दाहस्य (द्र?स्व)प्नोऽपि मत्सरस्य पृ(षित?षद)प्यमर्षस्य बिन्दुरपि निन्द्यतायाः प्रजाभिरज्ञायत ।

सोऽयमुज्जयिन्याः पत्युरुत्तमक्षात्रियस्य क्षेत्रियपरिभवामयस्य मानसारासारयित्वा सशासरेण(?) शैल(सो?सा)रौ भुजौ भुजगराजविडम्बनस(हो?हौ) सहयुद्धा पुनर्युधि महासिरूपेण भगवता महाकाळवासिना तमपि तावत् परेण पौरुषेण विस्माप्य लब्धप्रसादः प्रसाद इव जङ्गमः क्षत्रसहस्रपाक्षितः कीर्तिलक्ष्मीसरस्वतीनामुदारसत्त्वः प्राप्त एनां भुवमावसथ्य सकलत्रः सामात्यः स पितः प्रभावात् सर्वत्र्येकपदस्तपोवनमधिगन्ता महान्तमानन्दकल्पमभ्युदयप्रपञ्चम् (?) । अतोऽयमंशावतारो नरसखस्येति प्रियसखस्य

म धर्मसन्ततिरिति पुण्यश्लोको राजर्षिरिति सर्वथा मया ....[1] नीयश्चेत्यवसि(ते?त)-
वचसि महामुनौ तापसपरिषत् प्रहर्षोत्फुल्ललोचना भगवन् भवत्प्रसादादाकर्णितः
पुराणगीतः पुण्यो राजवंशः । श्रुतम ....[2] न्द्रियमनुविधत्ते महात्मनोऽस्य
दर्शनाच्चिरं द्रष्टव्यतृषस्य चक्षुरिन्द्रिय(म?)स्येति हृष्टतनूरुहा मुहुर्मुहुः श्रद्धालापा-
नुज्जगाल । राजा च सह सचिवैः कृतप ...[3] ब्रह्मर्षिणा प्रमूर्द्धाञ्जलिर्जानुस्थितो
जगाद । भगवन् परमनुगृहीतोऽस्मि । विभाताद्याचारानुबन्धिन्यविद्याविभावरी ।
उन्मीलितं चक्षु ....[4] ।

. . . . . . . . . .[5] लमघाः प्रागवागूर्ध्वं दक्षिणाग्राः सुरर्कि-
रसद्धिदहनाथद्रुहिणदेवत्या नद्यादिप्रलम्बाश्च सर्वदेवत्याः सम्भरणीया
दर्भाः खदिरकर .....[6] मवामलूपेरवघ्नानेघिशित्यनस्पाधातुयोनिरक्रिमिकान्ति-
रनतिस्निग्धरक्तकृष्णाशुचिरकर्कशकार्यावर्मलमालम्मवालुकात्रिभागवालुका ....[7]
क्रियेति लब्धा न रर्वो(?) पितृवेलायामकृतबलिकुसुमदीपधूपैरर्चिताश्रम-
देवतोऽपरेद्युरुन्मीलदुषःप्रभायामृषिवेलायां मृष्टसिक्ते ....[8] तंसकामर्कवेलाया-
मतिक्रम्य समग्रया च गुरुवेलया च सज्जीकृतसकलसाधनो नमोनारायणनाभि-
पुण्डरीकायमाणभानुभामण्डलाय ....[9] महेन्द्रवेलायामुपस्थितां दक्षि ....[10] ञ्ज-
मुदञ्जलिनोत्तमाङ्गेन जानुस्थितः प्रणामपूर्वकं प्रसाद्यावाहनासनदानस्वागतानु-
माननपाद्याचमनीयपुष्पगन्धधूपदीपार्घ्यहविर्भिर(भ्य)र्च्याच्युतचन्द्रशेखरौ स्कन्द-

1. L. about 7 letters.
2. ,, 16 ,,
3. ,, 22 ,,
4. ,, 30 ,,
5. 4 folios are missing here
6. L. about 32 letters.
7. ,, 25 ,,
8. ,, 20 ,,
9. ,, 2 ,,
10. ,, 4 ,,

विघ्ननायकौ देवं च सग्रहनक्षत्रतारकाचक्रं चन्द्रमसमुत्तरतोऽर्चयित्वा प्राच्यामच्छिन्नाग्रां हरि(द ? त)च्छदां द्वात्रिंशदङ्गुलाया(म ?)मप्रमाणां वेणुयष्टिं निखाय तद्ध्वजसन्निधापितं समरुद्गणममरराजमाराध्य हुत्वा चित्रभानुमैन्द्रैस्त्रयोदशभिर्मन्त्रैरर्चितसर्वदिव्यस्थानदेवतायतनक्रमसम्प्रोक्षितावसथमात्रापरिग्रहः शुचौ देशे व्रीहितिलसर्षपमाषलाञ्छितमच्छिन्नाग्रदर्भपूतं पुण्यगन्धसुरभिविष्टरमधिष्ठितः प्राङ्मुखाय पवित्रपाणये गुरवे गन्धप्रलिप्तान्तराभ्यां पात्राभ्यां पाद्यमर्घ्यञ्च दत्त्वा दत्तपुष्पगन्धमुदीचीनं भुवस्तलात् पवित्रमादाय धूपदर्शितमभिमुखप्रणामपूर्वमुपहरति, हृत्वा तु गुरुः स्वमूर्ध्नि क्षिप्त्वाक्षतस्पर्शितबाहुः परित्यजति दत्तदक्षिणश्च यथाशक्ति शिष्यो मर्षयतु भगवानित्यभिवाद्यापरानपि यतीनभिवादयते । सोऽयमेवाभिवादनवर्जं शिष्यादपि गुरोर्व्रतबन्धे विधिः । एवं च बद्धव्रतो विंशमहश्शतं नियतदेशविषेयशय्यासनादिक्रियाकलापो वसतीत्यामन्त्र्य क्षितीशं प्रातिष्ठत ।

उत्तरेद्युरुन्मिषत्येव कर्णगुरुकर्णिके दिनकमले कमलवनपरिमलिनि मिलितवनलतोत्केसरकुसुमकोमलोदरे विरचितविभातमारुते कृतप्रतिकर्मा समं जायया सानुयात्रस्तत्रैव मगधराजो जगाम । कृतोचितार्हणौ च दम्पती तमिन्द्रपूजोत्सवमनुबभूवतुः । इन्द्रसमं च सूनुमात्मनः समकल्पयताम् ।

वृत्ते च विखनसविधानविहिते विधौ स्थानस्थापितेषु प्रज्वलत्सु प्रदीपेषु बलवत्सु देवगृहे धूपेषु लसद्बालिकुसुमेषु द्विजगणपरिवेषणव्या(हृ ? पृ)तासु भ्रमन्तीषु पतिवत्नीषु बलिपिण्डलोलुपेषु चापतत्सु वनमृगेषु महर्षेर्नियोगात् किमपि सम्पन्नापत्यसाधनं विधृतकल्पं मन्त्रमद्वितीती(ये ? यं) प्रतिपित्समाने पत्यौ, तपस्विन्याः कुतश्चिदुपलभ्य सन्निहितपितापुत्रकं किञ्चिदासन्नं वन्यायतनं तामेवाग्रतःकारमपत्यश्र(द्धा ? द्धया)वनिपालपत्नी परिमितपरिजना जगाम ।

गत्वा च यथोपपन्नवनकुसुमाञ्जलिप्र(दा?)दात्री मुखप्रकटितोपयाचना स्वयञ्च सं[1] .... मालिनी प्राञ्जलिः प्रणिपपात। परमया च भक्त्या पुनःपुनः प्रदक्षिणं भ्रमन्ती तदायतनभित्तिचित्रे मात्रादेशात् सन्ध्याञ्जलिमुरसि दत्तचरणताडने विघटयति पञ्च[2] ...... त्र्यम्बकापाङ्गलक्षितामुद्धासपरवतीमुमामुपनिशाम्य समुपजातस्पृहा नभसिचरहृतनिजतनयवयोवस्थानुस्मृतिविदीर्यमाण[3] .....नी प्रलम्बशाखाचक्रे न्यग्रोधे सिकतिले (ति ? त)ले निस्सहा निषसाद। परिजनोत्सङ्गपातिनीवान्तध्वनि चिरं रुरोद। तस्मिन्नेव चान्तरे[4] ....।

[5]... हसानां सह पित्रा व्याघ्रदमनो व्याघ्राजिनदन्तगन्धद्रव्यकन्दमूलफलादिना प्रभूतेन सगणः समुपसृत्य भूमिपालं[6] .... भूभुजोत्तिष्ठेत्यभिहितः साध्वसविनयप्रणयप्रीतिमिश्रमुत्थाय तस्थौ। पार्थिवस्तु तं स्थविरं तात! किमसौ (म ? त्व)द्भ्रातेत्यन[7] ....., कमनोत्यन्त्रिप[8]....दः स एवायं देवस्य वनविहारोपकरणकोशः कौलेय(?) इति समं सुतेन पुनरप्यनंसीत्। देवी च प्रकाशं लज्जमाना जनान्तिकमिवार्यपुत्र सदृशो विन्ध्यसेनायाः (प)तिरिति शनैरवादीत्। राजा तु सम्यहीत(?)मन्योन्यसंवादि मिथुन(दि ?)मेतदित्यनुमतोऽमात्यानां ताम्बूलदानेन जनयित्रा समं तमन्वग्रहीत्। असकृच्च ज्ञातिपदारोपणैर्विन्ध्यवनवार्तानुयोगैर्निजगुरुचरिताकर्णनैश्च सुचिरदत्तक्षणस्तं जनमन्वरञ्जयत्। निबन्धकारितकर्पं भूषणावयवदानतोषितस्त्वप्यसज्जयत्(?)। राज्ञी तु नानुरूपा तवाक्रूरसावसारा मेखलेति, स्वशङ्करीप्रेषणातिप्रसादेन विन्ध्य-

1. L about 3 letters
2. " 18 "
3. " 18 "
4. " 28 "
5. 4 folios are missing here.
6. L about 24 letters
7. " 18 "
8. " 1 "

सेना(म,भ्यानन्दयत् । तौ वनचरदम्पती नरपतिमिथुनं तदहरहः कौतुककमनरम्यैश्च पार्थैरन्ववर्त्येताम् (!) ।

एवं च गच्छति काले कदाचिदपरयामेऽपत्यरविरथोद्भ्रान्तबाधापरिहारार्थमिवोत्सार्यमाणविषमोडुस्फटिकपाषाणराशौ(!) जरन्मयूरापाङ्गरोमधूसरे जर्झरायमाणतम(स्वि ! सि) स्वप्ने सप्तसागरपरिधिमग्तमन्तर्गतवर्षपर्वतद्रुममखिलग्रहचन्द्रतरणितारागुच्छलाच्छितम(प्यु ! च्यु)तमनुमिव लक्ष्मी पुण्यलक्षणा देवी जगद्गोलं जग्रसे । प्रतिबुद्धा च स्वप्नेनामुना भर्तारं तोषयाञ्चकार । स्वप्नफलज्ञ पार्थिवः कृतप्रतिमङ्गलः प्रगे सह समेत्य मन्त्रिभिस्त्रिभुवनभवनतन्त्रप्रणयिगृहमेधिनः सौधेषु तयशस्तिरोऽस्कारिणः( ! ) कुमारस्यासन्नमाविर्भावं समर्थयाम्बभूव । तेष्वेव दिवसेष्वमावास्यावसानिकममृतमयं भुवनभूतये रवेरिवेन्दुलेखा तेजसां निधेर्भर्तुरद्भुतं गर्भमाजग्राह । बन्धपादो देवी यवतरुणराहपाण्डरा(!) च परिपूर्यमाणा शनैश्शनैर्व्यक्तलक्षणासीत् । पारिप्लवहरिणचारुदर्शना च मुक्ताहाररुचिरदृश्यत । प्रतिदिनञ्च प्रवर्धमानगर्भगौरवा मन्दमन्दमुदयमाललम्बे । भूभृत् प्रतिमुञ्च शनैश्शनैर्घटमानकरपल्लवपुटा नियमितमुत्तिष्ठन्ती राजकादनेन तेनोऽगुह्यत तत्क्षणमवार्यत (!) गुरुजनसम्भावनार्थं चोत्थिता करगृहीतगाढमेखलोल्लसन्नितम्बतटा श्वसितपद्धतिमनुपतन्ती क्षणमिवाचण्डस्थि(कि ! ति)रभवत् । आनीलपयोधरमुखप्रसर्पिणं चन्द्रिकासितांशुकपटं भरमिवोत्ससर्ज । हंसकुलप्रचयसुकुमारचन्द्रातपधवळाम्बरतलविविक्तिनी च पूरितसकलाशनगनोत्सङ्गलग्नपादपल्लवा च कथं कथमक्षामक्षपयदपि च गर्भभरालसाया नखमयूखचलयोऽपि चरणलग्नः सदानकटक इवापनेतुं चितो ऽमनसा तरळमृजामनोहरसुरभिगात्रसङ्क्रान्तमपि प्रतिबिम्बचक्रवाळमिन्द्रनीलाभ(र)णमिवोन्मुमुक्षुः पर्यस्पदतान्तःकरममृतकिरणवेणिमप्यन्तलग्नां कुसुमदामयष्टिमिव निरासितुमसकृदैहत करकिसलयमरि-

कुलभङ्गयोग्याभिवरचरचयत्नारम्भण एव बलिश्रयं बमञ्ज(?) ।

गर्भो गर्भस्थितचक्रवर्त्यादिष्टमिवोजिहीषितमपि तमुमोचैव चरणयुगळमात्माधिष्ठितां भुवमत्यर्थमवलिते मन्थरायमाणे चक्षुषी स्वप्ननिगीर्णचन्द्रमण्डलामृतं [1].... लवहसगर्भातिपानभयपरिविनृष्टे सुतरां पर्यप्लवेताम् (?) । अद्भुतगर्भमाहात्म्यपरिवर्तितस्वभावा (व ? च)हीनस्वराणीति गुहासिंहबृंहितानि जहास । स्व [2].... तद्योत इति म [3].... न दिनकरमवमेने । आतस्व(र्वो ? र्वा)णीति विन्ध्यपर्वताग्रेषु गर्वात् परिभवं बबन्ध । देवासुरविक्रमेष्वपि प्रस्तुते [4]...... शक्नुवती लम्ब [5].... मानिव यादसाम्पतिं (न ? ना)चिन्तयत् । परिजनादेशावप्यपारयन्ती ससिद्धगन्धर्वविद्याधरं भुवनमादेषु स्व [6].... चमानैकाकिन्येव खड्गधारानिर्वैरीकृताशेषवर्षावर्षपर्वतेषु भ्रमितुमाशशंसे(?) । तथा च खड्ग इति मृगविशेषे [7]...., विचक्र इति मण्ड [8].... विपि नखर इति कररुहेऽपि शक्तिरि(च ?)ति सामर्थ्येऽपि प्रयुज्यमानमुत्सवगर्वितायां श्रवणमाजगाम त्रियामा च प्रसुप्ता मदोल्लितबाल [9].... ताविकसितसितशतपत्रातपत्रधारिणीपरिचारवर्मा चर्मकृपाणबाणचापचक्रशङ्कुतोमरशूलिभिरष्टाभिर्भुजलताभिर्भगवती ररक्ष साक्षाद् विन्ध्यवासिनी(?) ।

तदेवं देवतानुवृत्तिदर्शितोद(भे ? भ्र)गर्भानुभावाया देव्या दैववशाच्चतुर्णाम(प्यारभ्य ? प्यमात्या)नां पुरोधसश्च ब्रह्मदत्तस्य भार्याः पञ्चापि युगपदा-

1. L. about 3 letters.
2. „ 4 „
3. „ 3 „
4. „ 20 „
5. L about 4 letters
6. „ 32 „
7, 8. The two lacunæ cover about 20 letters
9. L about 14 letters

पत्नसत्त्वा बभूवुः। विन्ध्यसेना च गर्भं बभार। सुषुवे सूनुं सिंहदमनं नाम। अनया च वार्तयोर्व्याःपतिः पत्नी चाभ्यनन्दताम्। अदत्तां च प्रदेशकं प्रभूतम्। अथ कतिपयेष्वतीतेषु वासरेष्वसूत सुतं सुत्रामाणमिवादितिर्देवी च वसुमती। तस्य जन्मनि तत्तेजःप्रसरप्रोषभया दिवोच्चैःस्थान(भाव ?)भाजः सर्व एव ग्रहा जज्ञिरे। तस्मिंश्च समये तत्संभवं कलये कलिनिधनकरं निवेदयितुकामा(प्य ? इ)तिवातादयो दोषा दुद्रुवुः। तस्यापि त्रिभुवनविजिगीषोर्देवस्येव विष्टरश्रवणमेव जन्मदिनमुदयश्चास्य प्रथममेव तदनुरूपापरश्रीनिर्माणकामामनु(?) प्रतिनिर्मथ्यमानसिन्धुनाथह्रादनानीव दिङ्मुखान् व्यापादयन्तो देवस्यावेदयन् देवदुन्दुभयः।

परिजनस्तु रभसव्याकुलं केवलं जहार पूर्णपात्रम्। प्रसरति च प्रतिमारिष्टभवनप्रदीपचक्रवाळे स्वयमेव काले त्रिभुवनदीपमालिकोल्लासिनि मङ्गळप्रदीपतामालम्बमाने गर्भरागानुबन्धिनि सन्ध्यायितरोचसि तस्य तेजसि त्र्यम्बकजटाकदम्बभ्रान्त्या पतन्तीवामरसरि(द्‌ ? द)भ्राजिष्ट दिव्या पुष्पवृष्टिरूपा। जगाम च प्रभावज्ञातवृत्तान्तो द्रुतगतिचटुलजटाकलापः प्रहर्षक्रियमाणकिलिकिलारवेण स्वगणेनानुयातोऽवदातवृषाधिष्ठायी कारयितुकामः कुमा(रो ? र)जन्मोत्सवमुरुतमप्रमोदो भगवान् वामदेवः। सहोमश्चासावचीकरत् स्वयमधिष्ठाय कृत्स्नां पुरोधसां विधिम्। अनन्तरञ्च महर्षिणाभ्यनुज्ञातस्तेनैव समन्त्रजातैः पुत्रमप्यालम्बितबहुपुत्रकं सहलमुसलधरमप्यवनमालावारणमुरुक्रममप्यरिष्टसङ्गतं शक्तियुक्तमप्यपाधिष्ठितं भूपतिपरिहृतोद्देशमपि लक्ष्मीसमध्यासितवध्यमानखमषावयवकञ्चुकित्वमप्यवितुषिककाञ्चुकीयहर्षनृत्तशोभितं(?) बहुविधरक्षाधूपं दुर्दिनान्धकारमप्यविकलपुण्डरीकच्छविसनाथं स्थानस्थानं निखातचारुविटपमभ्यर्च्यमानषण्मुखप्रमुखदेवतं हरितपत्रपल्लवकुसुमदूर्वामिश्रसर्वौषधीसर्षपाङ्कमपासुलोलोभजयानकस्पर्शपूर्वमप्रविश्य(?) सूतिकागृहं क्षामक्षमाया मातुः

सन्निधावुदयरागलोहितायमानमूर्तिमंशुमालिनमिव बालमानन्दजननं जनयिता कुमारमद्राक्षीत् ।

ईक्षमाणस्य चास्याकर्णसेतुदीर्घयोरक्षिदीर्घिकयोः कमलोत्पलकुमुदकान्तिशालिन्योः शीतलेऽम्भसि तरळतारके तारतरं ततारेव तनयाननदर्शनानन्दम् । अनेन च तारयित्रा दुस्तरमपूर्वपोतकेन तीर्णमेव वर्णात्रयत्रिखण्डं(?) संसारसागरस्य मेने । मन्त्रिणोऽपि महदि(नदन्मा?दमा)विर्भूतमभूतं भूतानां भू(त?ति)हेतुरित्यविरत(बा?ह)र्षबाष्पपूरप्लुतेक्षणाः क्षणे क्षणे कमलया इव कण्टकि(त)तनवः सस्मितमाचचक्षिरे । कुलपतिस्तु तपःप्रभावाध्यक्षेणाध्यक्ष(य)न्नमु(ख?ष्य) महात्मनः परमाद्भुतं भाविचरितमीषत्स्मितो हर्षगद्गदिकाग्रथितकण्ठमब्रवीत् ।

(वत्)स ! राजहंस ! पश्य तावदयं स कंसशत्रोरंशः । वंशस्तव चापि कान्तो यस्य राजकुञ्जरस्यातिभूतं चत्मिदमस्य करकमलतले चक्रमेव कथय चक्रवाळपरिकरधराधरायां समग्रस्य पुरुषसिंहशस्याशितंभवमात्रमाविषमष्टादशक्षेत्रवर्तिद्वीपजातं षण्मुखेनामुना पुत्रिणैकेन स्पृहयेत् प्रायः पितापि षण्मुखस्य(?) । धन्येयं वत्सा वसुमती यस्याः कुक्षेर्निधिरयमद्भुतः समुद्भूतः सद्गुणरत्नानाम् । भाग्यवत्य इ[1] . . . . . पापरपरनिर्वृतिद्वारमुत्थित इति ब्रुवाण एव तस्मिन् भगवतः पाकशासनस्य शासनात् तस्य च सर्वचक्रवर्तिनामग्रतःसरस्योपीभ[2] . . . . . . प्रसर्पिणीस्वपव[3] . . . . . प्रभा-

1. L about 20 letters.

2, 3. The two lacunæ cover about 26 letters

प्रसरे पद्मरागरङ्गपीठ इव नटन्त्यश्चटुलतुलाकोटिमणिरणितानुपातिनीषु मन्दा-
किनीहंसमण्डलीपुण्डरीकमालास्विव लक्ष्मीविल[1] . . . . . . . . इव स्वभाव-
बद्धानेकरागवृत्तिभिरुद्वाहितनितम्बमण्डलानुपलितैः कल्पद्रुमकुलपल्लवैरुल्लसित-
कुचतटतरळपुरतकुमुकुळमुक्ताफलवर्षयो(!) हर्षनृत्त[2] . . . . शिखरकणकरालित-
कुमारयोग्यशक्रप्राभृतामृतकलशवाहिन्य इव लक्ष्यमाणानना मणिभूषणांशु-
मालिन्यो ह्लादिन्य इव राजसूनुरुपिध्वानजनितमेघगर्जिताशाः शक्र-
धनुस्सहस्रानुकर्षिण्योऽपकीर्णाश्चमयिमिवाननैश्चतुरहासचन्द्रातप(व)र्षिभिरभ्रमय-
मिव धम्मिल्लपल्लवैश्चलाकामलप्रलम्बमालोल्लासिभिर्दीप्यमानकामधूमरेखामयमिव(!)
भ्रूलताभिरूर्ध्वपलितवेल्लितचटुलकोटिभिर्विजृम्भमाणकुवलयसरस्सहस्रमयमिव लीला-
पाङ्गलास्यैरुन्मदभ्रमरमालोद्दामविभ्रमैः प्रचलरागपताकामयमिव भुजलताभिः
कमलकोमलतलप्रभासम्भारकौसुम्भांशुकपटपाटलाग्राभिराकुलाकुलरतिप्रवाळमयमिव
लोलपारिहार्यैरवैरतनुरागजन्मभिर्बालातपच्छेदमिव तरळकर्णपारिजातकिसलयै-
र्भास्वन्मुखविलासिनीभिः कामराज्यमयमिवाम्बरद्युतिवितानैरनुरञ्जितसकलदिग्गि-
रतमरण्योद्देशमादर्शयन्त्यो वर्षन्त्य इव लावण्यं समुद्गिरन्त्य इव रस-
सरित्प्रवाहं भ्रमयन्त्य इव विभ्रमं विक्षिपन्त्य इव विलासं दिव्यवीणावेणु-
तालमुरवमद्दलपणवादिभिस्तुम्बुरुनारदप्रभृतिभिरनवभैर्गन्धर्वराजैरभ्येत्य सुरस्त्रियो
नृत्तगीतरासकलास्यमल्लीसकलाप्रमोदैकतानमुत्सर्पं प्रचक्रुः । प्रोद्भिद्यन्त इव
भुवस्तलाद् महोत्साहदर्शिननिामानना(नि ! नी)व नागसुन्दरीणां हिरण्मयाति-
तामरसानि कुमारदर्शनरागिण्या धरण्या स्वयमपावृतानि भवनद्वाराणीव
रत्नचामीकरमयान्याविरासन् महानिधानानि । कल्याणकर्मकर्णधार इव

1. L about 22 letters
2. „ 4 „

विकीर्यमाणविविधपुष्परेणुपिष्टातकप्रकरो बभ्राम सुरभिरितस्ततो मन्दमारुतः । प्रसन्नोज्ज्वलमुखीभिर्दिगङ्गनाभिः प्रमोदगी(ति?त)मिवो(द्रा ? दगा)यि प्रगीतिः । चारणगणगीतरागप्रतिरवेण दिव्यगान्धर्वतूर्यध्वनितपूरितैर्गुहामुखैर्विन्ध्योऽपि प्रहृष्ट इव प्रततमुन्ननाद ।

किं बहुना, तन्मुहूर्तमकल्पत स्वर्गभूयाय तद्धर्मकाननं, यन्निशाम्य व्यस्मेषत सया(द ? न)भिन्नमनसोऽपि ते तपोनिधयः । स च समग्रो देवतागणः प्रणिपातेन स्वागतेन मधुरव्याहृतेनासनदानेन च यथानुरूपं भूपालेन सम्भावितस्तमामन्त्र्यान्तरिक्षं जगाहे । महर्षिरपि वामदेवः कुमारानुभावसंबद्धयैव सङ्कथया सुचिरं स्थित्वा प्रत्यासन्ननियमवेलः कर्तव्यान्युपदिश्य सह तपोधनैः स्वमेवाश्रमं जगाम । तावच्च कांस्यतालकाहळगोविषाणशङ्ख(म ? )मद्दळान(त ? क)तिमिलाशब्दैस्तदरण्यमापूरय(न् ? ता) प्रतिपदस्खलितविह्वलं प्रनृत्यता वृद्धेन व्यालदमनेन, मधुमदहर्षोपविष्टेनापरेणैव नृत्तमार्गेणाधिकचतुरश्रचारिताक्षिभ्रुवमविरलचरणनिकुञ्जनक्वणितनूपरमाविद्धाकुलकुसुमदामधम्मिल्लबद्धबन्धमसकृदाकुञ्चितप्रसारिताञ्चितोत्क्षिप्तभुजलतावलम्बितोत्तरीयमारोचितनितम्बफलकाचालमेखलमान्दोलितकर्णपाशलोलकुण्डलावघट्टितांसमनवधानस्खलितपादविषमितलयमायासस्वासभिन्नगीतरागमावर्जितपृथुपयोधरहारमारब्धानन्दनृत्तया प्रनृत्तशबरीसहस्रमध्यवर्तिन्या विन्ध्यसेनया, निनर्तिषावारतरलितनितम्बभागमातामहीपतिपरिगृहीतेन(?) च त्रिमासजातेन किमपि मुग्धमुखमुद्गर्जता सिंहदमनेन, नृत्य(तं ? ता) गायता क्ष्वेळतोन्नदता समास्फोटयता सङ्घट्टयता च सुमदोद्धतेनाश्लीलपदप्रबन्धोहारिणा(?) तुम्बुरुतुमुरुपुमुखकिरातबर्बरपुळिन्दभिल्लमालमातङ्गप्रायेण महता वनचरसमूहेन

पुरस्क्रियमाणबहुळहर्षकोलाहलः स्वयञ्च नृत्य(न्) व्याघ्रदमनः समहस्य-(ति?त)। चिरादिव च प्रशान्तकलकले काननौकसामनीके सिंहदमनप्रणिपात-प्रीणितः पृथिवीपतिरयमपि कुमारस्यानुरूपमेव मित्रमावयोरिवास्मत्पित्रोरिवा-नयो[1] .... र्योदाहार्यमस्त्विसुलभप्रसादहारगौरवानम्रशिरसं व्याघ्रद(मन)मनु-गृह्य सह पित्रा व्यसर्जयत्। विन्ध्यसेना तु गतेऽपि भर्तर्यपारय(ति?न्ती) कुमारा(दा?)ननानन्द[2] .... पि सिंहदमनमपश्यन् पितास्य कथं सहेत याहि पुनरप्यागमिष्यसीति देव्या निर्बध्यमाना कथंकथमप्यवितृष्ण[3] ........ पर्यणंसीत्। सञ्जायञ्च(?) मन्त्रिणां चतुर्णां भार्याः पत्नी च पुरोधसः पञ्चापि ताः पञ्चार्थानिव पञ्चेन्द्रियप्रवृत्तयः पञ्चदारकान् मनोनुकूलानलभन्त। पञ्चभिश्च तैः पञ्चपर्वा विद्रुमाङ्कुर इव कुमारः सुजातः स्ववंशलक्ष्म्याः पर्याप्तं भूषणमगण्यत। प्रहृष्टतमेन पित्रा तेषां च गृहेषु स्वजनवत् स्वयमधि-ष्ठायोर्वीपतिः सर्वाः क्रियाः कारयामास। तथा समृद्धमनोर(थ)श्च म(न्त्री? न्त्रि)परिषदि स्वयमिदं बभाषे। चित्रः खलु जीवलोकः। बहुरूपाणीव भवितव्यस्य विस्फूर्जितानि। को न्विमामस्य दशां पश्यन्नपि श्रद्दधीत। तिष्ठतु वा(व?प)रः। स्वस्यैव मे स्वचरितमत्यन्तपरोक्षमिवालक्ष्यते। स किलैवायं संयुगेषु भ्रमितबद्धेनावभ्रामाद्भुतभ्रमय इवासृग्धाराश्चाश्मस्कर इव मधुकृद्भिराश्चर्याभिक्षोदैश्चित्रिताङ्गः पपानायतलतप्रसुप्तश्च जने सुजन-दुःखसागरमनभिसरस्सुदुस्तरं तारानुजग्रहे चाह्वाय स्वप्नसन्निहितेन भसि-(नवना?तवता)महाकालनिवासिना नृत्यमिदमनुभूयमानव्यसम्भाव्यसम्भाव्य-तया नाभिप्रणयतिश्च यं(?)। क चायमष्टादशगणाभ्यर्च्यमानजन्मनश्चक्रपाणे-

1. L about 8 letters
2. ,, 34 ,,
3. L about 16 letters

रिवात्मजज(न)नोरस(वम ? वा)नुभवः । कश्चायं प्रकारो यदस्यैवमात्मनः शरीरान्तरितादस्यैव पु(न)रिमेऽपि पञ्चविकल्पाः पञ्चबालकाः समं समभूवन्निति हर्षभरेणातिमात्रं पीड्यमान इव तस्थौ । सु(गु ? म)तिस्त्व(म ? )ब्रवीत् । न(तु ? नु) देव प्रहृतमेवेदं यथा सारवत्स्योशवाश्मस्विव तुहिनतेजसी सुखदुःखेति प्र।ह्रीभवनी मेतरेषमहस्सु च प्रपतितान्यगेष्विव मृगशृङ्गाणि व्यसनान्येव व्यसनमापद्यन्ते( ? ) । व्यापद्यतश्च विरसाम्नानोऽपि व्यवसायवता विलङ्घ्यमाना नियतं पारावारोर्मय इवान्ते महान्तं लाभमावहन्ति भवादृशश्च तेजस्विनस्तिग्मगोरिवावसर्मादर्शनमात्रमप्रमत्तस्य जगतो न तु स्थास्नुक्षिप्रवानुभावं भाजनमेव भवानीदृशस्य कल्याणप्र(प)ञ्चस्य(?) । न(नु) वसन्त एव स्वभावसुरभौ निपतन्ति जगदानन्दभूमयः कुसुमातिशयाः । क चायमन्यत्र चक्रवर्ती जन्मग्रहणं कर्तुमर्हति । तमन्तरेण क्षीरसिन्धुमस्ति क(श्च ?)श्चिदुद्भवः कौस्तुभमणेः । त्रिभुवनसुकृतमयानां च पार्थिवानामुत्पत्तौ नातिचिन्त्रीयते नानुनिष्पादिनामुपकरणानां सामग्री ननुवकसन्तवोत्तरमनु विकसन्ति पङ्कजाकराः( ? ) । तदेतेऽपि पञ्च (बलकां ? बालकाः) कुसुमकोमलमूर्तयः शरा इव शरीरजन्मनस्तवोत्पतत इव स्वार्थसाधनाय हस्तेकृता इति । अपि च मन्त्रिणो हृद्यसम्भवं तमानन्दधुरमिवोद्गिरन्तस्तत्कालोचिताभिः सुचिरमासाञ्चक्रिरे । प्रौढे च प्रदोषसमये राज्ञाज्ञप्ता जुजुषुस्तोषवन्तो य(दा स्वा ? थास्व)मास्पदम् । नृपेन्द्रोऽपि निजे पर्णभवने शयनीयमभजत । प्रीत्या चोपगूढस्तं निशांशमप्यनीनयत् ।

अथ गुणिनि नक्षत्रे प्रशस्तायां तिथौ सम्पन्ने मुहूर्ते सह महर्षिणा संमन्त्र्य त्रिलोक्यामस्यां सर्वत एव राजनेम्पत्येनधिष्ठिता( ? ) यथास्वं भारमेतेषाञ्च वाहयितेति यथोदितेन विधिना राजवाहनं नाम राजसूनुं राजकीयो गुरुश्चकार ।

स्वं च तनयं सोमदत्त इति स्वजातिसमुचितेन नाम्ना समयोजयत्। सुमतेः सूनुः प्रमतिरासीत्। सुश्रुतस्य विश्रुतः सुगुप्तस्य मित्रगुप्तः[1]। तेषु चैवं कृतनामसु मातृस्तन्याशनेषु वर्धमानेष्वर्भकेषु कदाचिच्छबरसेना नाम जननी विन्ध्यसेनायाः पलितगौ(र)शिरसमनतिनृशंसाकृतिमार्यवेषं कमप्यारण्यकं पुरस्कृत्य परिवारजने स्वयमेवादरादर्पितश्रोणीपार्श्वा वर्षजातमपि द्विवर्षमिवोपलक्ष्यं लक्षणैर्दयार्द्रैरिवानहदशापन्नपरिगृहीतं(?) सिंहशावकमिव कश्चिद्यदृच्छाधिगतं पृथुकं पृथुपल्लवगुच्छप्रतिषिद्धोष्णमुद्वहन्ती समुपसृत्य सभर्तृकां देवीमवन्दत। अभ्यधत्त च सदासी विन्ध्यसेना विज्ञापयति— बालोऽयं बालसेवके (ऽनु)रूप इव कुमारस्यास्यागममागमय्यास्मदाज्ञाक[2] .... परं भर्तृपादाः प्रमाणमिति।

प्रीयमाणस्तु पृथिवीपतिः अङ्ग! आचक्ष्व। कुत इहास्य सम्भवः कच्चिदिह कानने कञ्चिदृषिमपि लोभयन्त्याः कस्याश्चिदप्सरसः कृतार्थतेयमन्यथास्मि दुग्धाशिरीषकोरकुमारे[3] ........ वेदवष्टम्भोऽयमीद इत्युद्भिन्नकुतूहलः स्वयमेव तं शबरमप्राक्षीत्(?)। स तु प्रणम्य विज्ञापयामास— देव! श्रूयताम्। इ[4] ........ जन्मान्तरेऽस्यामेव विन्ध्याटव्यां[5] ........ या मातृष्वसुः पतिरपर इवै(कु? क)ल्व्यः कलेरिवांशावतारः कर्ता कोलाहलानां प्रहर्ष[6] ........ प्रगृहीता पल्लीपतीनां लोप्ता जनपदानां गोप्ता मलिम्लुचानामनभिज्ञः क्षुत्पिपासयोरवसरज्ञः सम्प्रहाराणामित्यभि[7] ........ प्लवङ्ग इव प्रांशुवृक्षारोहणेषु कौशिक

1. It seems that some words are missing here. The passage must read सुमन्त्रस्य मन्त्रगुप्तः सुमित्रस्य मित्रगुप्तः.
2. L. about 2 letters
3. „ 8 „
4. „ ..
5. L. about 10 letters
6. „ 32 „
7. „ 25 „

इव क्षणदाजागर्यासु मत्तगज इव प्रतिसंवेष्टनो मृगपतिरिव सर्वसन्दोह-पाती प्रलपन्निरन्तु[1] ............ शीतोष्णवर्षवातोपद्रवेष्वविकारी विमृश्यकारी शक्यारम्भशीलः मृगविहृतिविभागविदविसम्वादितनिमित्तजटाकः कर्तव्येष्वदीर्घ-सूत्रः कृच्छ्रेष्वप्रतिपत्तिः प्रथनेष्वनिव(र्ति ? र्ती) सर्वायुधेषु निष्णातो वपुषापि भयङ्करः किरातपतिर्यथार्थनामा सार्थमर्दनो नामास्ति । तस्य मामवैतु मातुलमलातचक्रनामानम् । (दवस्ते ? ते व)यमपसर्पमुखादुपलभ्य मैथिलमवलेप-वशादशङ्कित(वे ? मेव) तरन्तमरण्यवरानायुग्मं सदापातस्तम्भनिर्भयप्रवृत्तश्च बहुतमामिषत्वादाशापूरणसमर्थं सार्थं हस्तवर्तिनमेव तमवस्यन्तः प्रनर्दन्तः प्रनृत्यन्तश्च हर्षात् पुरुषमुपहृत्य देव्यै विन्ध्यवासिन्यै सिन्धो पतिरश्शत-देयमित्यवस्थाप्य सुनिशितासिधेनुस्यूतस्वप्रकोष्ठस्त्रावि(का ? ता)स्रवचयस्सरसत्त्व-विसारसारतज्यासज्यकोदण्डयष्टयः सद्यः प्रतिमुक्तनूतनबर्हवाससामाश्यान-शोणितप्रलेपप्रचलितकुण्ठयारण्यश्मसुमुखनिशाययित्वा शरणां सम्भृतशूल्यमांस-वल्लूरवल्लूरिप्रमुखक्षेमाशनाः पशुपुरितदृतीधूता विश्वासोत्प।(त ? द)नाय कतिपय-दिवसाप्रतिरुद्धाध्वनी(नां ? नाः) सुशकुनप्रपञ्चवर्धितोत्साहाः कृतस(ञ्जीयो ? ङ्केता) यथायथं सेनापतिप्रदिष्टेषु प्रतिरोधनस्थानेषु विपिनसत्त्वापाश्रया निभृत-मिवातिष्ठामहि(?) । प्रावर्तत च प्रमत्तरूपो रूपाजीवानुरागदष्टिवागुरितविधुर-वीरतरुणस्तारवरतालशुङ्गभङ्गलोभलम्बमानाङ्गनाजनः सासिचर्मैकहस्तत्रिजित-भटगृहीतपाकपाकस्वादुफलापचायप्रसृतप्रकृतो मार्गोत्थितमृगानुधावनच्छिद्रुरसं-हतिरिहवियसौरभेयकरभराभसर्दादिकार्यद्धोद्धुरप्रहरतपृथग्जनो निम्मिविम्लु-[2] .... शङ्किनीभयमलिम्लुचामलायोगवत्पूर्यमानमान्यवेलञ्चलपटो काण्डदण्डपट्टन-

1. L about 22 letters
2. „ 2 „

रूढगोभणिगोणिक्षेपक्षुभितक्षुद्रस्वामिदुश्शाठ्यक्रोशवर्धनो रमेरमिगर्भगः परवृद्ध-वैषम्यवार्यमाणलोकप्रणोदो नैमित्तिकदुर्निमित्तोद्घाहणप्रतिसमाधीयमानशङ्कितवर्गो मार्गज्ञजनकथ्यमानचिह्नितभयस्थानः सावधानप्रस्थितः स राजसैन्य(।!)सम्भृत-सार्थो महासार्थः(!)। प्राप्ते च स्वगोचरमाहतपटुपटहगोमुखाख(न!)का मुख-पव(नो! वा)ध्मानशब्दायमानशङ्खपि(च्छाव! च्छोला)कोहळाः क्ष्वेळोत्सृष्टकर्णी-रवक्षुभितकक्षमण्डला, मण्डलितप्रचण्डकोदण्डघनबाणोत्सृष्टकाण्ड(द्व! द्व)द्वयो हतहतेति प्रथितमभिव्याहरन्तश्चलितप्रभूतभारबलक्षुदर्शनपरिवृत्तयो(!) व्याघ्रा इव विजृम्भितक्षुधः क्षुभिता इव प्रलयनिर्घातघोरवेगमेते बलमुग्राक्षिभुवा भक्षयन्त इव तद्बलं रभसमभ्यपताम। तनुशिबिरगर्भतया प्रस्थान(पर!)-परतया बहुसङ्कटतया विसङ्कटतयान्धतया च तस्योद्देशस्योन्मुक्तबहळ-हाहाकारमुद्भ्रान्तभीरुशिबिरचाराबला(बा! पा)लनाहीनसन्नद्धं नदत्सङ्कटमुद्भट-करिघटाप्रमथभिन्नाशाटितशकटकोटिसङ्कटमुत्कटशरखण्डकण्टकितविकटकङ्कटि-कवण्डकचकितं चिटितपटुरभयहरणपरपुरुषकिरातकृतकपटा(ब! प)सारमुत्सेक-प्रसृतनाशीरचारुभगभग्नभग्नपृष्ठ्यवलयजवजङ्घारवझटझटायमानगुल्मद्रुमकर्दनम-र्दितबलीवर्दवृन्दनिर्दयविमर्दकर्दमितरुधिररुद्धमार्गाङ्गवत्कान्दिशीकदेशिकायमान-शठशबरदर्शितात्मवलीपथमपहतद्रुमविलुप्तविध्वस्तं समर्थमेव सार्थचक्रमसत्प्रियं कामितशोच्यदर्शनं तत्क्षणादजायत(!)।

स तु नरपतिरमरतुल्यप्रभावः प्रभ(ने! ग्ने)ऽपि सर्वसैन्ये सुयोधन इवाक्षताभिमानः स्वयमसक्तसारकासारवर्षवारिवाहायमानबाणासनो दारुणक्रोध-ताम्रेण चक्षुषा निर्दहन्निव ......[1] क्षिप(त्)। दर्पितात्मा च सार्थमर्दनो

1. L about 20 letters

महानुभावे तस्मिन्नशबराहं बहु पराक्रमत। स च महा(न्) सर्वैरेव सज्जधन्वभिरस्माभिरभ्रैरिव गिरिरभ्यव[1] ....... सार्थवाहैरूर्ध्वदोर्दीराक्रन्द्यमानो दुष्करप्रतिसमाधानं तद्बलमवगत्य दुर्गमत्वं चात्मनो विधुरतां च क्षेमस्थास्यग[2] .... भूयिष्ठ(?)[3] ....... कृतः पार्श्ववर्तिनोऽन्वयुङ्क्त। सङ्कुले केनाप्यप्रप्रस्थितं देवीवाह्यमित्यभिहितो गृहीतहस्तारं वैदेहिकजनमभयगतञ्च सस्त्रीबालवृद्धं च[4] ....... ध्यध्याधदर्शमानुगैराशुकारि शनैश्शनैः प्रातिष्ठत(? । सार्थमर्दनस्तु मामभुष्मिन् पातःस्थाने महतः सारसञ्चयस्य रक्षाविधौ नियुज्य राजानमन्व-बध्नात्। आह्वामयन्नन्तश्च मातङ्गपुलिन्ददुर्मुखानां सार्थलक्ष्म(?)समूलकां कषन्तः कांश्चिदसिघातं घ्नन्तः कांश्चिद् जीवग्राहं गृह्णन्तः कांश्चित् पशुमारं मारयन्तः कांश्चिद् दण्डेन कालयन्तः कांश्चिज्जीवनाशं नश्यतोऽभिगृह्य पूषवाहं वाहयन्तो(प्त्रा ? स्त्रा)णि कांश्चिद् गुल्मानुप्रवेशं लीनान्वेषमनस्सु चक्रबन्धं बद्ध्वा पार्श्वोपपीडं शाययन्तः कांश्चिदसहिष्णुतयोरस्पेषं युध्यमाना(न्) ध्वजेषु-ग्रहमाकृष्य हेलयाक्षिनिकाणं प्रहसन्तः कांश्चित् पशूनिव यष्टुपघातं कालयित्वा व्रजावरोधं स्थापयन्तः कांश्चिदजनाशं नष्टान् गुहान् गुहानंशेन प्रवि-वेशमाकर्षन्तः कांश्चिन्नीचैःकारमालपन्तः (व?)क्षुपलीनानुपलभ्य हर्षाद्न्योन्यं नामग्राहमाह्वयन्तः तथाच केचित् गुह्यकजनकथकानि कौतुकरावर्षमामुञ्चन्तः स्वादुङ्कारमासवसुरारिष्टसौवीरकतुषोदकानि यावद्वेदं शुल्यमांसोपदंशं पिबन्तः कर्पूरस्फटिकं पाषाणशुष्कपेषं पिष्ट्वा नरास्त्रविस्रेण वक्षसि क्षिपन्तो बन्दीजनं च नागाकारं कारणाभिगुप्तमरण्यं परिभ्रमन्तः परमहृष्यत्यजिकान् क्षुतान्ये

1. L. about 25 letters.
2. Space for 4 letters left blank
3. L. about 26 letters.
4. „ 20 „

मृगा इव शय्योत्थायमयमहरहरामिषान्वेषिणोपनान्वयं परिधावन्ति ते तथा धनपोषं पुष्टा हृष्टा इव च(?)। लुप्तांसोऽप्यहमुपलिप्तमिव (कु?गु)रुचन्दनै-रुपहृत(मिव) शिरःपङ्कजैरुप्तमिव बहुमुखरत्नभूषणैरुद्बन्धकमिव भाण्डकूटैः स्थगितमिव ताररोमकुम्भैः पुष्पितमिव प्रकीर्णकप(व?)करैः पल्लवितमिव रत्नतालवृन्दैस्तारकितमिवार्घपदपुलकजालैरत(न?नु)वनदन्तिभग्नवार्गळाभिरिव छिन्नाभिर्वीरबाहाभिः कीर्णं काळरात्रिस्वयंवरमञ्चैरिव काञ्चनदंसनैः(?)वाजि-गजकलेबरैराचितं मधुरापुलिनमिव कंसमण्डलाकीर्णं वनमिव जातरूपघटाकुलं बार्हद्रथमिव भग्नद्रावितमधुदण्डं राजकुलमिवोन्नाताविनिपलोकं वल्मीकमिव बहु-मुखक्षरद्रक्तस्त्रीगणनिचितं गणिकाकुलमिव रत्नरक्तमुक्ताफलका(न्तोदा?न्तमा)यो-धनस्थानं स्थापितरक्षः परिहृत्य रक्तचिक्किल्ललीनशल्यं हृल्लेखनमितस्ततो[illegible]चरन्(?) बहुमर्मक्षतरुजाभिर्निमील्य चक्षुषी दीर्घमन्तः स्तनन्तीमन्तककरकरकषणधा-वज्जीविताभिव क्षरत्क्षतजं क्षितौ विवेष्टमानां रुधिरपेषं पिष्यमाणामिवाङ्गरागीकर्तुं कालरात्र्या घर्मवनलतामिवाम्भसामलाभादूर्ध्वशोषं शुष्यन्तीमष्टादशवर्षदेशीयां युवतिमद्राक्षम्। अभ्यर्णे च तस्याः किम(प्य)र्भकस्येव रुदितशब्द(माचकर्णं?कर्णयं) न त्वज्ञासिषम् (इ?कु)तोऽस्य सम्भूतिरिति। अथ (ताता?जात)दयः किञ्चिज्जीवसीत्यप्राक्षम्। अक्षमा तु सा वक्तुमक्षिणी मनागुन्मील्य दयमानं मामवेक्षमाणा यत्नादभाषत। आर्य! किं मया मन्दभागया मृतया धृतया वा। (य)स्त्वसौ करिशव(र्णत?क)र्णपल्लवान्तरितो भ(द्र?र्तृ)दारकः सम्भावय तावत् स किं जीविष्य(ती?)ति नवेति तस्याः श्रुत्वा जातकौतूहलः सहसोपसृत्य पतितस्य परासोः स्वपत इव मतङ्गजस्याङ्गमङ्गारकितमिव शी(नश?)नैरसृग्भिरभ्याक्रम्य ग्रीवान्तरे तोमरेणाधःकीलितं परितः पङ्क्तिस्थितै-रिषुभिरवगाढत्रिभागैः परिक्षिप्तं द्रक्षुपरीतिरुद्धपर्यन्तमिव पर्यशेषं घर्म-

पल्वलकमूर्ध्वदृष्टि मुलितक्षेपैरुच्छ्वास्यमानं सप्राणवृत्तिमिव तद्विरदमादर्शयन्तं श्रवणपल्लवमस्योपलक्षयम् (!)। उद्धृत्य प्रहरणान्युत्क्षिप्य च गजकर्णपञ्जरस्पृष्टमेव शल्यै[1] ......... तोमरशरशिरारूढितास्रोत्सनसेवनीयां(?) विकटकण्ठरज्जूकर्ष-क्लिष्टपृष्ठकमिभरुधिरकुङ्कुमरसच्छटाच्छुरितोभयभुजमाश्चर्यायुषं राजसूनुमेनं[2] .... क्षिप्तचक्षुरक्षतशरीरतामस्योपलक्ष्य कर्मण एव वैचित्र्यं चिन्तयन् तामुपेत्य वरवर्णिनीमवादिषम् । भद्रे! समाश्वसिहि[3] .... देवानां प्रियः कोऽस्य दुष्कृतिनौ पितरौ ययोरयमीदृशोऽपि शोकापनुदः शोका[4]....... मृगपतिकुमारकस्येव करिकुम्भस्थलदलनपातिनो बाल्यादस्फुटवः निवेशस्खलितभ्रष्टस्य(?) यदृच्छया श्रव..पञ्जरो[5] .... त्यखिल[6] .... ते मयासौ योषिदुष्णं दीर्घञ्च निःश्वस्योदश्रुणा मुखेन ...न्यमिव क्षरन्ती प्राणदायिनमिह भगवन्तं मुक्त्वा कोऽन्यः श्रोतुमर्हतीति बहुमान(निगृहि? निगृही)[7] .... वेदना शनैरवादीत् । आर्य![8] .... श्रवणपथ-मा..ता एव नूनमृद्धिमन्तः प्रयतां द्रोहदेहिनो(?) विदेहाः । तेषामधिपति-रवर्तन इ... जनकवंशस्य देवः प्रहारवर्मा नाम । सोऽयमासागरवसुन्धरैक-वल्लभस्य मगध...पतेरिद्धस्य देवस्य राजहंसस्य दृढमसाधारणप्रेमपात्रं मित्रमासीत् । तदन्त...कुलललामभूता च जन्मभूमिर्गुणानां देवी वसुमती नामास्य प्रियायां(तु?) प्रियंवदायामतिमात्रप्रायजीवितेव द्वितीये(?) स्नेह-वत्यभूत् । आपन्नसत्त्वां च तां सखीस्नेहात् दिदृक्षुर्देवी प्रियंवदा भर्त्रा सह मगधानवासीत् । अस्मिन्नेव चान्तरे मानसारेण नाम राज्ञा...ळवो?

1. L. about 12 letters.
2. „ 20 „
3. „ 32 „
4. „ 44 „
5, 6. The two lacunæ cover about 36 letters.
7. L. about 4 letters.
8. „ 2 „

माळवेन) देवस्य मगधराजस्य गङ्गायमुनयोस्सङ्गमे तारकामयसमान(न्द?)मति-
महदमराणामपि रोमहर्षसञ्जननं जन्यमजनि। तत्रायं जनकराजः प्रहार-
वर्मा. रश्मिरिव महसामसमप्रता(पं?पः) कृत्वा सहस्रशः क्षत्रियाणामन्त-
मनन्तरं प्रियसखेन सिंहवर्मनाम्ना (व?अ)श्मकेश्वरेण साकमेकरथे(नेवा?नैव)मृत
इवास्त्रतल्पमधिशयानस्तेन राज्ञा म(ा)ग(धमा?धेना)हवाद(वा?पौ)ह्यत। स तु
देवः क्षत्रजीवितध्वान्तशस्त्रपशुकुक्षिर्विपक्षहृत्प्रयुक्तेन केनापि दिव्यकृपाणेन
स्वबाणश्रेणिचूर्णितेन रणलक्ष्मीदृष्टिवृद्धिपिष्टातकरेणुनिकरेण (वाप?चाव)चूर्णि-
ता(स्त्व?स्त)थासीद्यथा सदक्षिणस्थलस्य रथ्यस्य जनकस्य गात्राणां लगो-
पिकानां देवप्रत्यभिज्ञानवर्तिनीम् (?)। इमाञ्च वार्तामपास्तमकुटकुण्डलप्रकम्ब-
हारादिभूषणः स्वयमुपेत्य मालवेन्द्रः सहाङ्कराजाय षट्स्वामिने स्वजनवदश्रूणि
विमुञ्चन्नश्रावयदस्तम्भयच्च कथं कथमप्यनेकविधैर्वीरधर्माख्यानैः। अहर्निशं
च स्वयमधिष्ठाय निजभिषक्प्रयुक्तैर्भेषजैः क्षतान्यरोपयत्। आत्मना च
स देवः स एव निर्व्याजपौरुषो जितवान्, अहं तु दैवतशरणः पराजित
एव किं ममानेन क्लीबस्येति सर्वक्षत्रमध्ये शस्त्रं परित्यक्तवान्। ईदृश्या
तु तत्र साधौ प्रतिरूपया प्रतिपत्त्या प्रकृतः प्रहारवर्मा प्रियसुहृत्
प्रवासेऽपि प्राणान् न पर्यत्यजत्। प्रव्रज्योदन्तस्तु प्रबुद्धैर्नापुत्राणामयज्वनां
च पानपत्स्य(?)मस्तीति सन्तानोत्पादने प्रयत्नम(गृ?ग्रा)ह्यत। प्राप्तोपपत्त्या-
मेकस्मिन्नेव गर्भे(?) माद्रयमसौ देव्यां प्रियंवदायाम्। प्रीयमाणस्तु
मालवेन्द्रो विश्वजितं नाम सर्ववेदसं यज्ञमाहृत्य तस्मिन् समाप्ते मगधेन्द्र-
वि(म)र्दलब्धं भद्रवाहनं नाम रतेर्दत्तोत्तमाभिः सत्क्रियाभिः परिगृह्य(?) सहैव
सिंहवर्मणा स्वदेशगमनाय जनकराजमन्वजानात्। अयं च राजा नगर्या
निर्गतक्रमेणाङ्गानागत्य सुहृत्प्रेम्णा कतिपयान्यहान्युषित्वा चम्पायामुच्चलितो-

ऽध्वन्येवासमुखाद् दृतैर्ज्येष्ठभ्रातुः **संहारवर्मणः** पुत्रैर्विकटवर्मप्रभृतिभिरवष्टब्धान् विदेहानुपलभ्य(मान ?)मागधमाळवसमितिशान्तसर्वबलोऽपि रोषादभिषेणयन्नमात्यैर्न्यषिध्यत ।

स्वस्रीयन्तु सुहनाथं प्रत्यन्तदमनायादृशा(?) विन्ध्यपार्श्वसन्निकृष्टं श्रुत्वा ततो बलैकदेशेनात्मानमावार्य प्रत्यमित्रं जिगमिषुरवक्र इत्यध्वनानेनागणितकिरातचक्रः परिक्रान्तवान् । न च ज्ञायते कस्यामवस्थायां वर्तत इति । मम तु मन्दभाग्याया माता (पो?मा)तेव (शर्म ? सम्म)ता महिष्या राजसूनोर्वर्धने नियुक्ता ......[1] क(म ?)नीयांसमप्यग्रहीत् । अथाहमनतिक्षोभसुखाया शिबिरकयैव न मूह्यमानमुल्लायन्त्वक्ष्मपाविशं यस्त्वयमवचूलचामर ......[2] धारणयुवा ममात्रिमाक्रमिममनेन च मद्दर्शनस्फुरितरागेण वेगोपश्लेषितद्वीपेन किमपि कम(?) ....[3] ।

...............[4] ज्वरायानिबोचरितः क्वचिदच्छे निर्झरस्पयसि काननसुलभं कन्दमूलं प्राश्य परिणमति पतङ्गमण्डले नोणवेष्विव निष्पतत्सु निशीथिनीविहार ......[5] स्नुहिदलाररिपुटक(?)मार्यागृहा(यां ॰नि ? न्नि)र्गतायां देवलिकायां तस्करवद(न ? नु)पदमलक्ष्यमाणः केनाप्यनुप्रविश्य बहु चिन्तयन्नुपाविशम् । अथैनमरुणमाल्यानुलेपनमुरणपोतकमिव पीतपयसमायसपरिघनिष्ठुरेण बाहुनैकेनोपगृह्यापरेण तदनुद्धौतान्धार्यां रचयन्न(य ?)सिधेनुकां विकोशामा(शा ?)काशदेशमुच्छ्रिमाषकाशिश्यामतमे तमसि महिषस्कन्धकाषः(?) करतलस्फुरित(शा ? श)स्त्रिकाप्रकाशितः स्वरेण मे सुज्ञातः स एव जीर्णव्याधः

1. L about 30 letters.
2. ,, 30 ,,
3. ,, 44 ,,
4. 4 Folios are missing here.
5. L about 20 letters

सर्वग्रामाभ्यनुज्ञातो निर्भयविशङ्कमभ्यागतः प्रदक्षिणं भ्रमित्वा प्रणिपत्य भगवतीं निपात्य निर्दयममुष्य दीर्घायुषो (देहं ?) देह(र ? म)वन्यामयमसौ तव विन्ध्यवासिनि ! वनचरकुलदेवते देवि ते नवन(पनि ? वनी)तकोमलो बालबलिरिति वामनावशाद् विचकर्तिषुः क्षुल्लकामुदयच्छत् । अहं तु दिव्यानु(वो ? भा)व(द ?)दर्शनाय सावष्टम्भगम्भीरीकृतस्त्रीस्वरानुविद्धां च काकुं भावयन् गच्छ गतभयः हनं पापमिति ब्रुवन्नेवैनमक्षताङ्गमाक्षिपम् । असावप्यवसितप्रयोजनः पृष्ठमनवलोकयमानः प्रहृष्टरूपः प्राधावत् ।

अहमप्यात्मनस्तद्ग्रामीणैर्दर्शनं परिजिहीर्षुरस्य हेतोः (त्व ? त्वु)त्वा सुम्भ[illegible]दि(नि ? नी) निष्क्रान्तस्तयैव यामवत्या म[illegible]तमध्वानमत्यलङ्घयम् । अर्पयितुं च ते प्रजापालाय प्रजामिमां कृतमतिरुपस्थितः । यथायं वर्धते विनयमभ्युपैति पित्रोश्च प्रमदमन्ते सम्पादयिष्यति सर्वमिदं सर्वभूतैकबान्धवो भवानेव ज्ञास्यसीति विरराम ।

तत[illegible] मृ[illegible](ष्ट ? ष)[illegible] [illegible]स्रोतस(वि ? व) चक्षुषो[illegible]निविका-सिनि प्रभाज[illegible] [illegible]उज्जयन् जात[illegible]तिः पृथ्वीपतिः [illegible]जगाद । भगवन् ! पश्याम्या[illegible] [illegible] मृ[illegible] ........ [illegible]जमपि पश्य दुर्घटघटनक[illegible] [illegible] नु मम य[illegible]त्कृष्ट[illegible]: [illegible]-सम्भ्य न. प्रम[illegible]वर्ति ? [illegible]तरणमारण्यकैरत्यासादनं तत्रैतस्य राजदा ... .... [illegible]मुना व्याघ्रवृद्धेन हरणम् , उपायनी[illegible]करणं, [illegible]-सेनया चाम्ना दर्प(ण)नितरस्य हेनिकृच्छ्रादुत्थितस्य व्याघ्र ........ मृत्यु-

1. L about 5 letters
2. ,, 9 ,,
3. L. about 4 letters

[1]....... करुणाकुलगृहेण शेमुषीबलादाकर्षणम्, उभाभ्याञ्च दारकाभ्यां तथा दूरविश्लिष्टाभ्यां पुनरिहैकत्र पित्रोरेवं नौ हस्तागमनमिति स्वप्नेऽपि क (उमां सपत्नींसमभाव ? इमां सम्पत्तिं संभाव) [2].... नुभूयमानेश्वर्यवृत्तान्तेन सख्युर्मे रत्नोद्भवस्य गुरुपुत्रयोरपि सत्यशर्मकालपालयोः प्रवृत्तिमाशंस इति प्रसङ्गेन प्रवृत्तवाचं भर्तारमन्तिकस्था जननी राजवाहनस्यापृच्छत्। आर्यपुत्र! क इमेऽद्यापि नाम्ना विदितास्तवैवमाशंसनीयदर्शनाः । नूनमत्यासन्नबन्धवो गुणवन्तश्च भवितुमर्ह(न्ती)ति ।

आह(स्त्र ? स्म) च महीपतिः । आम वासु प्रसन्नस्ते तर्कः । प्रियाश्च गुणिनश्च ते न चासीत् सम्भवस्त(ल ? व) ज्ञातुमनूढायामेव खल्वत्रभवत्यां वृत्तो यश्चित्ररूपो वृत्तान्तः । कौ(तिकीति ? तुकिनी) चेदाकर्ण्यताम्। अस्य खलु मे जनयितुरखिलभूतभावनस्य मदनाजितो नयनभूता(स्या ? स्त्र)यो बभूवुर्मतिशर्मा धर्मपालः पद्मोद्भव इत्यमात्या(दि ?) दीप्ततेजसः। तेषामाद्यः शुचिरनूचानः प्रथितकीर्तिराहर्ता (तत्र ? क्रतु)नामसङ्गहरुचिः प्रजानां पितेव सुशासिताङ्गिरसश्च गोत्रेणासीत्। इतरस्तु वैश्वामित्रो मैत्रिनिधिरनुद्धतो घृणावान् धीरधिषणः क्रियासु दक्षो लक्ष्मीं प्रत्यनुत्सुको यशसि गृध्नुर्यथार्थनामा धर्मपालो नाम। अपरस्य विस्तारिणी कथा । यस्स वि(स्मित ? व)स्वतस्सुतः स्थाणवेयो मनुः तस्य क्षवथोः क्षत्रमूलमिक्ष्वाकुरासीत् । अनुजस्तस्य नाभा(दे ? नेदि)ष्ठः स दिष्टबलात् कामचारः कचरंशमंशवे माणिभद्रस्य भद्रभावमद्रिसमुद्रद्वीपाटलीपुटभेदादिष्वभिनवा सरागमत्युदारव्यवहारमग्रे प्रावर्तय तस्य बहुं महात्मा मयार्जुनेषु मन्द्रतन्द्रो भलन्दनो भालन्दनायनेषु प्रवृत्तेषु पिवीतिषु स्वर्वार्तो-

1. L. about 10 letters 2. L. about 6 letters

कर्शनैस्त्रिभिर्दीप्तरूपश्चक्षुर्भिरिवैति शोभामीश्वरस्य विग्रहः(?)। षाड्गुण्यविहारशीलस्य च विजिगीषोः (पी ? क्री)डोपकरणमेते मित्रामित्रमध्यमोदासीनलक्षणान्विताः सर्व एव राजानः। तव तु पित्रानेन कृतविद्येन वृद्धदर्शिना वश्येन्द्रियेण शुद्धामात्यमन्त्रिपुरोहितसखेनाष्टादशतीर्थसमप्रयुक्तोपसर्पेण सपुरप्रकृतिमण्डलावर्जनपरेण मन्त्रज्ञानसंवरणोपायपटुना त्रिविधदूतप्रयोगाधिकरणवेदिना नित्योत्थानशीलेन सर्वापायद्वाररोधिना स(स ? र्व)विधकर्मानुष्ठानपण्डितेन शक्तिशोचानुरूपे( ? )युक्तसर्वाध्यक्षेण लवमप्यादेयमनुत्सृजता लक्ष(र ? म)प्यनादेयमनादित्समानेन व्यवहारप्रत्यवेक्षिणा यथार्हं दण्डय(था ? ता) संवृत्तिना चित्रो य (?) प्ररयुद्धृतराष्ट्रदुर्गराजराज्यकण्टकेन मण्डलविभागयोगिना षाड्गुण्योपयोगरसिकेन सर्वव्यसनवर्गनिर्धारणक्षमेण यात्राङ्गविनिश्चयविचक्षणेन साङ्ग्रामिकविधिविशारदेन समुच्चयविकल्पयोजितोपायवर्गेण बलीयसा पादियसासत्प्रकारलभ्यदुर्गेण( ? ) सर्वद्रव्यसंयोगशक्तिकौशलाद्भुतचरिते(नात्थ ? न) त्रिवर्गसेविना भुक्तमिदं (चि ? चा)द्वितीयातपत्रमत्यायतं भरतेनेव भारतं वर्षम् । इत्थंप्रायवृत्त एव भूयसामर्षणप्रकृत्या संत्वरितस्त्ववन्तिपुर्यामैक्ष्वाको मानसार[1] इत्यमोघनामा नरपतिरमुष्य हेतोरामर्दकेन भगवता .... क्षिप्य ततः क्षीणः क्षितेः क्षितिरक्षताभिमानः(?) पुनरसावनवगीतवीरव्रतो जितस्स देवेन। तेनाहं[2] जित इति सद्यो न्यस्तशस्त्र(मैश्वर्ये ? श्चैश्वर्ये) पुत्रं दर्पसारमभिषिच्य ..... रवन्तिसुन्दर्या[3] योग्यवरप्रतिपादनोन्मुखः तदसम्भवादनल्पोद्वेगमप्यात्य[4]सत्याशारसोऽपि दर्पसारो दर्पात् परिभौमान् भावेन ...... ण्डशीले स्याले चण्डवर्मणि निधायाधिपत्य(मत्योना?)मत्युग्रेण समाधिना समाराधयन्नन्ध-

1. L about 2 letters 3. The text seems to be defective here.
2. „ 14 „ 4. L. about 22 letters.

कारिमध्यास्ते शैलं कालम्। अस्मिन्नन्तरे सह सुहृद्भि ........[1] दस्तिच्छेदन्यं भवतः। तद्यथा जम्बूशाककुशक्रौञ्चशाल्मलिगोमेदपुष्करो-चवाबा(?) योजनलक्षाद्युत्तरोत्तराद्विगुणवृद्धया .........[2] नरप्रकृष्टायुर्भोग-माहात्म्याः पूर्वं पूर्वमावृत्य चक्रवदवस्थिताः सप्तैते द्वीपाः। तस्यास्य जम्बूद्वीपस्य द्विसहस्रविस्तारो .....[3] न्त षड्वर्षपर्वताः। तत्र च विचित्रकूटोऽपि नित्यमध्यस्थः सदूरवृत्तारम्भोऽपि सदाकृतिरख्योऽपि स्वश्रचतुरश्रशोभी बहुम-......[4] रशीतिसहस्रयोजनोच्छ्रायः षोडशसहस्रावनाहः सौवर्णो नीलकण्ठ-हेलाताण्डवभवंशरावयारुर्मेरु ......[5] रतारावगाहश्चतुस्त्रिंशतं सहस्राण्यानी-(स?ङ) निषधमायतो गन्ध(माद)नस्तथैव नमोत्वद्री पूर्वे शैलो माल्यवा ...[6] रिकिंपुरुन्महरतानि-तावन्त एव नीलश्वेतशृङ्गश्राणवमद्राश्वा मध्ये तु हिरण्यगर्भ ......[7] वेतानि वर्षाणि वसना सन्तानकेनापि कृष्णधन्वःसन्निभे महा-कलत्र इव तद्दक्षिणो .......[8] लिनश्चक्रवर्तिसहवस्य भारतवर्षस्येन्द्रवरुण-सोमगन्धर्वनागद्वीपास्ता .......[9] माकुमारि चास्य द्वीपस्य योजनसहस्रा नवसहस्रमेव पुनरेव तु .......[10] कुञ्जभूमयः कुलपर्वता(?)। वर्षपर्वतस्य तु हि(म)वतः पृष्ठस्थे ......[11] शोपशमित इव चन्द्रश्चन्द्रप्रभो नामाच्छो-दसरःक्षरदच्छोदकरत्नरोघो .......[12] रः पूर्वदक्षिणस्तु माणिचरधर्म-गोष्ठ्याकृष्टयक्षविस्मृतविशोकारण्यसङ्केतकुपितकामि .......[13] सावसेकरूढा-

1 to 40. These lacunæ have been caused as a result of the halves of two folios missing.

14
ञ्जनतटान्धकारितत्रिभमूतो ब्रह्मापेतपरिग्रहब्रह्मराक्षसीकुचक्षोमलुळितमानसो . . . मस्तु पशुपतिपादानां पद्ममुद्राभूषितपृषदुत्सङ्गः सङ्गीतरसातिसङ्ग

15
भ्रान्तभूतव्रातार्पितशीतशैलोदसरस्सा . . . . . . . . कुलकुञ्जो मुञ्जवानुत्तरा-

16
परः पुनरुपरिवसद(व ?)संख्येनागस्त्यचरितयज्ञापेतब्रह्मराक्षसकुलकुड्यं . . . . . . (बि)न्दुसरो हिरण्यशृङ्गः(?)। तत्र सा तपसा कृशभिन्नभगीरथानुक्रोशमन्दकुल-

17
धीमौलिरुद्धमुक्ता व्योमापगा पावनी . . . . . विवक्षुरिति दक्षिणन्तु भगीरथानु-ग्राहिणी भागीरथीत्येकधैव भेदभिन्नविन्ध्या विवेश हिमवतः परमसमरविल-

18
म्बिजं . . . . . . रिकळत्रयोर्वनस्पतिज्योतिष्मत्योः प्रत्यादिष्टनन्दद्युतिषु

19
तीरारामराजिषु राजीवरजोतिभार(भार ?)मन्दचक्रवाकच . . . . . . रक्षन्ति क्षीरामिक्षयो यदुपभोगरागेणामृतपरिभाविनः पुनरवतरन्ति मानवेषु

20
देवगणाः(?)। नवानङ्गदेहाभि . . . . . . षवासुकितक्ष(क)प्रधानविषधराधिवासो

21
विष्णुपसरस्यन्दी(?) गन्धर्वाणां बालाम्बु . . . . . . हानस्ति क्रोशमात्रवृध-

22
फलबन्धबन्धुरो जम्बूवृक्षः सुदर्शनो नाम। ततः पृथुरत्नशिल . . . . . . णात्मसन्तरर्थ्यविच्छेदायैव भावयति। यत्र च वृत्रारिगोप(यु ? पु)ञ्जयुते-

23
र्जाम्बूनदस्य जन्म या . . . . . . तपत्रेणेव मेरुणान्तरि(त)त्वादन्तरिक्षतलस्य

24
तथाविभ्रमानवाकामवभूतमणि . . . . . . त्रान्धकारदिदृक्षाकौतु(क)मद्यापि नोप-

25
रतमेति प्रसिद्ध एव मेरुपारः सपरि . . . . . भूतिभूमिदेवा हविर्भिरध्वरेषु

26
सिद्धब्रह्मर्षिबन्धयोगासनपवित्रवयवैड् . . . . . . न्ध्र्याभिष्यन्दमिव दर्शयन्ति

27
रम्यकेतुरोहिमणमधूपभोगभावितरातिप्रपञ्चप . . . . . . . हारसघोत्सामृतकान्ते

28
[illegible]

29
पितृगणसप्तकप्रतिष्ठामणिमयसर्वरत्न ......... मत्स्यो वालुका रौद्रमपि
30
निसर्गसौम्यं सरो रुद्रक ..... यांसि सरांसि मधूनामेव युगपद् बन्धानवद्य-
31 32
प्रेमभारा ..... ण्डिकासु पनसफलरसोपयोगात् कुवलयदलरुचयोग ....
यत्र करिकिंपुरुषायोष्ववर्षायुतमायुरिन्द्रवज्रप्रभया ऋषभधूम्रदुन्दुभयस्त्रयोवगा
33
...... लामाक्षिजलाशनो जातवेदाः संवर्तकः पश्चिमतकः सोमकवरा-
34
हनादराश्चन्द्र ..... मेरुश्चन्द्रो जलधरो रैवतो नारदः (रैवत?) श्यामो
35
दुन्दुभिरस्तः सोमकस्सुम(नाः) ....... स्सप्त वर्षपर्वताः(?)। तत्र मेरो-
36
र्वैवारम्भश्चन्द्रे बलमिन्द्रेण प्राग्रमश्विभ्यां ...... वेतावुत्पन्नौ श्यामे श्यामतां
37
परापन्नः दुन्दुभिश्च सुरासुनिररागामि ..... क्षमक्षपयदर्चिलोमखलिसवासरेषु
38
तु केरिणी सरविवेलोमातरिश्वाप ....... नाम ध्रुवमित्यस्त्रक्षीपाश्रम-
39
व्यवस्थानि सत्यशौचशालिखिनित्यत्रेतायुगान्यरद ...... धेनुका सुकृता
गर्भगर्भस्विनीति गङ्गाभेदा नद्यः(?)।

40
कुशद्वीपस्य तु कुमुदो विद्रु ...... षो हरिमन्दरः ककुद्मानिति सप्त
चि(त्रास ? त्रसा)नवो वर्षपर्वताः। (हरिता)लमय उन्नतो वराहकोऽञ्जनमयः पुष्प-
1
(वति ? वान्) मृतसञ्जीवनी विशल्यकरणी .... रे महेन्द्रमहाहो रत्नराशिः।
तेषां तु वर्षाणि (वेदमुक्तिदं ? श्वेतमुन्नतं), लोहितं वेणुमण्डलकं, जीमूतं स्वैरथा-
कारं, हरितं लवणं, ककुद्धृतिमद्, मानसं प्रवरकं, कपिलं काकुद्ममिति
विभूतिमन्ति सप्त। सप्तैव च सि(द्धोवो ? न्धवः) धूतपापा योनितोया,

1. L about 16 letters

शिवा, पवित्रा, वि(तृ)ष्णा च, चन्द्रा ह्लादिनी, विद्युच्चन्द्रका, विभावरी (दण्डावृ ? पुण्ड्रा धृ)तिर्महतीति ।

क्रौञ्चद्वीपे क्रौ(ञ्चेण ? ञ्चो) वामनोऽन्धकारो देवा(वृ)तिर्दे(वेन्द्रो ? वनो) गोविन्दः पुण्डरीक इति सप्त वर्षपर्वताः । द्विविदः पावक इति गोविन्दवामनावाहुः । सप्तैव च वर्षाणि कुशलो मनोनुग उष्णः पाव(र ? न)कोऽन्ध(का)रको मुनिदेशो दुन्दुभिस्वर इति । (द्वा ? ता)वत्य एव नद्यः । गौरी कुमुद्वती सन्ध्या रात्रिः ख्यातिः पुण्डरीका मनोजवेति गङ्गाभेदाः ।

शल्मलिद्वीपे तु सु(र ? )मनाः पितोऽपुत्रानीत(?) इति परिमण्डलास्त्रयो वर्षपर्वताः । वर्षाणि कुशलाः पापरकमन्धकारकमिति त्रीण्येव ।

गोमेदद्वीपे सुरकुमुदावञ्जनशातकुम्भ(योः ? मयौ) पूर्वपश्चिमो वर्षपर्वतः(?) । वर्षे च द्वे । वर्षपर्वतपरिमण्डलो मानसोत्तरं तस्मिंश्च रत्नगिरौ पूर्वदक्षिणापरोत्तरेषु दिङ्नागेषु इन्द्रयमवरुणसोमनगराण्यमरावती संयमनी सु(खा ? षा) विभावरीति पर्वतद्वीपानामस्त्युत्सवः पारे स्वादुपारिपरिमण्डलो भूतिकमवभृतः सालोकनिरालोको लोकालोके इत्ययुतविस्तारोऽच्छ्रायश्चक्रवाळगिरिः(?) । अधश्च प....[1]लं नाम कृष्णभे ....[2] मन्त्रमुचिमगा नारदशरभशङ्कुकर्णकबन्धकिष्किन्धादिभीमलदत्तश्चापदादीनां दानवेन्द्राणां कालयकलशजयादीनां च नागराजानां भूतिमद्भिः परस्सहस्रैरध्वा ....[3] तीयमतलं नाम पाण्डुभौमजम्भमहाजाम्भ ....[4] शग्रीवसुवशखजगोमुखप्रमुखाणामसुरेन्द्राणां नीलमेघक्रथनानां च रक्षोधिपानां तक्षकास्वतरकं

1. L. about 2 letters.
2. Space for 4 letters left blank
3. L. about 3 letters.
4. Space for 3 letters left blank

प्रबलप्रभृतीनां ........[1] मीश्वराणां श्रीमद्भिः शोभते पुरीभिः । तृतीयं त्रितलं नाम रक्त(वृ ! मृ)त्तिकं त्रिशिरःशिशुमारताराक्षमहादानुह्राद(नि ! मि)-मुखादीनां दैत्येन्द्राणां च्यवनखरविराधकुम्भकोल्कामुखानां च ........[2] हामणिदत्तपाण्डरकपिलविशाविशाणां(!) च दर्शनश्रवसामृतपौरवृन्दैरुद्योतते । चतुर्थं गभस्तितलं नाम पीतमृत्तिकं कालनेमिगजकर्णकुञ्जराणां सुरद्विषा-मेक एव सुकुमालिमुञ्ज ....[3] माद्य नक्तञ्चराणां चतुर्दशसहस्रविहगविशेषाणां भर्तुश्च काश्यपस्य मरीचि(द ! त)पःप्रभावसम्भूतस्येन्दुम ....[4] णाद्भुतानुभावलब्ध-महेन्द्रसख्यस्य यज्ञमयपुरुषवाहन ........[5] मयस्य भगवतो वैनतेयस्य विभावनीति नगरमुदारशोभमाभरणानि वेद्मभिः(!) । पञ्चमं वितलं[6] नाम शक्तिरियं विरोचनादीनां दानवानां महामेघद्विजिह्वविद्युषानां च ....[7] लकृतः स राजकेसरी । मन्त्रिणश्च महिष्या सह विन्ध्यं वनं विन्ध्य-वासिनीवरिवस्यायै गतास्तयानया दुष्प्रवृत्त्या तत्रैव तनुं त्यक्तवन्त इति । सा चेयं प्रत्यावृत्तप्राणसंशया भूयोऽपि तेनैवं प्रत्याश्वस्यत साध्वी । दुरवबोधा ........[8] दवगतिरप्रमेयाः प्रभावमार्गाः । तथा हि— (रघो ! कचो) नामामरगुरुसुतः दसु(!) सम्पीड्यासुरैः (सरास्सञ्चितः ! रहसि निहतः) पाटितोऽपि भगवतो भार्गवेण स्वोदरा(मे ! दे)वोदभाव्यत ।

1. L. about 4 letters .
2. „ 6 „
3. „ 4 „
4. Space for 4 letters left blank.
5. L. about 3 letters
6. Space for 5 letters left blank.
7. From this up to the 15th line on page 216 the portion seems to be extraneous and a few lines are missing.
8. Space for 3 letters left blank.

भीमाभिभूतभारद्वाजप्रेषितैषीकास्त्रग्रस्तममध्योत्तरेयस्याः(?) प्रत्याहृतं द्वारि दामोदरेण । (धृत ? पितृ)शापहतश्च नाचिकेताः प्रेतनगरमेत्य प्रत्याजगाम । जामदग्न्यश्च रामः (कपि ? कुपित)गुरुनियोगानुवृत्तकृत्तशिरसं तत्प्रसादात् प्रत्यजीवयत् सवित्रीम् । सावित्री च पातिव्रत्यात् पतिं पत्युः परे(तना ? तानां)हस्तादाचकर्ष(त ?) । राघवश्च शूद्रशमिशम्बुकोपायनेन लेभे धर्मराजा(द्) द्विजातिदारकं, भीरथ्यश्च गान्धारराजो नग्नबलयोमं विजित्य प्राप्तो नग्नजत्वम्(?) । चित्रविभक्तमूर्तिः .............[1] तानामपि न ..............[2] मुक्ता नत्वबला सुकुमारान्तवर्ती च भूत्वा समुत्तीर्णमहार्णवा सर्वावस्थास्वप्यायुष्मताममृत्युदर्शने त्वमेवासि प्रमाणम्, अतोऽन्तरेण ........[3] सतीमृते समाश्वासहेतोः यदपि राज्ञो राजहंसस्य लेशतोऽप्यनुपलब्धिर्नामाभावरूथं सोऽप्यप्रहतो मरणमार्गः(?) । तथा च तस्या देव्या ........[4] चेतराणि चाननं पुरः परा हि सञ्चरति तदवलम्ब्यते धैर्यं क्वापि तापसाश्रमे तत्कालपक्वं कर्मफलमशरपाना निमील्य लोचने ........[5] तः समीपे काश्चिदेनां कथञ्चिदेव ज्ञातीयद्विसृष्टः(?) स विद्यार्थी यथेप्सितां दिशमयासीत् । इयञ्च जटिनी वल्कलिनी व्रतपरा च जरत्तपस्विनी परिचरन्ती गणनायकं प्रक्ष ........[6] ता कुक्षिमाशुशुक्षणेः क्षणेनानेन रक्षितैवं देवेनेति ब्रुवत्यैव सा रजक्यरोदीत् । स त्विदमाकर्ण्य सन्तताश्रु शोच(न्व?)तीं बन्धूंश्च निश्चित्य मया हर्षगद्ग........[7] योन्माणामहीसुरकुचाश्च सोऽतिमात्रं सुमेधाय कृपया वातावादिमामस्ति(?) ।

---

1. Space for 20 letters left blank
2. L about 10 letters.
3. Space for 24 letters left blank
4. ,, 24 ,,
5. Space for 18 letters left blank
6. ,, 10 ,,
7. ,, 10 ,,

स देवो राजहंसः सह देव्या वसुमत्या पितृभ्योश्च सुश्रुतसुमन्त्राभ्यां
मातृभ्यां च(!) [1] .... ना विश्रुतमन्त्रगुप्ताभ्यामन्यैश्च मन्त्रिदारकैस्समं समवर्धत।
उपनीतश्चापि हि विनीतो विद्यासु षोडशस्वृषेर्वाल्मीकिसमस्य वामदेव-
स्यादेशाद्दिग्विजयप्रयात [2] ........ न्द्रेर्योपमानस्यानुग्रहायासुरबिव(र)मनुक्तैवावतीर्णे
देवे दुरव(रा ! बो)धतया निर्गतपथानामितस्तमन्विच्छ [3] .... मित देहान्मृत्यु-
मुखप्रविष्टं निष्क्रान्तयोः पित्रोर्वामप [4] ....... द्वाग्रहीषमेव चार्थः पितुरा-
र्द्रार्द्रयान्तःकरणप्रवृत्त्या मातुश्च मे प्रेमप्रसुताभ्यां पयोधराभ्यां पूर्वमेवावेदितः।
पुनरुक्तं तु मया कृतबबाधिकमचेष्टाः प्रलापाश्चानन्त्यान्त्यलक्षणा। उपलक्षयितुं
न शक्याः तदलमतिप्रपञ्चेनामुना(?)। [5] वयन्तु मातुरावसथं गताव ....
हरत्यवाहयामः परास्मिन्न [6] ....... तस्य निधिं जनस्योपयोगमन्वबेत्य
सङ्गृहीतकतिपयपुरुषस्तेषां पापशोधनाय षोडशहस्त [7] .... तानां नगराणि
नानार(त्न)मयानि धार [8] ..... सारिसुवर्णपर्वणां सुरारीणामुरुक्रोशस्य निशाचरस्य
शक्रसखस्य सरसा नन्दिवर्धनस्य वासुकेर्वसतिमणिमयमत्र [9] ...... ति।
सप्तमं तु पाताळनाम हेममयं मायावामनत्रिपदिना (न?) हृष्टापदा(त ! न)स्य
दानवेन्द्रवृन्दारकस्य बलेर्वैरोचनस्य मुचुकुन्दस्येन्द्रानिर्विशेषस्य च विषधरेन्द्रस्य
इन्द्रनीलाम्बरस्येन्दुमण्डलपाण्डरस्य [10] ...... .लस्यार्चिमालिनो द्विसहस्रजि-

1. Space for 10 letters left blank
2. „ 8 „
3. L. about 2 letters.
4. Space for 10 letters left blank
5. L about 6 letters
6. Space for 18 letters left blank
7. L about 5 letters.
8. Space for 14 letters left blank
9. L about 10 letters
10. „ 5

ह्यालोचनस्या[1] ...... स्सह स्वान्येषाञ्च नागराजदनुजनाथरजनिचरेश्वराणां पुराणि पूर्णानि चन्द्रमुखीनामुद्धरत्नधामानि नृत्तगीतनित्यरम्याणि धत्ते ...[2] पर्यपि (द्यो? ज्यो)तिर्मयालोकः सर्वतश्च बहिरम्बुवलयं दशगुणमवनिमण्ड ....[3] भूतानि महान्ति पूर्वपूर्वमावृत्य भुवनं धैर्यमापादयन्ति । परमनादिमध्य-निधनमपरिमाणमव्यक्तवियति भुवनकोशे यास्ता लोकपुर्योदव्यग्रव्यग्रं मेरो-रेवोपरि तदालोक(?) .......[4] भवतो देवब्राह्मणानुग्रहादाज्ञाविधेयं भविष्यति । वैष्णवानां हि (चेत? तेज)सामुदित इव कश्चिदंशस्त्वदात्मना स्थितः, सर्व एवातो सर्वमुनि अग्रग्राहिता भवन्तं परिभवतु द्विमासमात्रं सोढव्या द्वीप-सार्वद्वारिकं नक्षत्रं सर्वदिग्विजिगीषासंवादि श्रावणस्य तत्रानुकूलवर्तनैव प्रायासि पृथुरिव पृथ्वीं स्वीकर्तुमित्येतावदभिधाय विरमति स्म(?) ।

स तथा मुनिगुरुप्रकाशितोऽतिशक्रश्चक्रवर्तीमभिमा सर्वलेपा .......[5] वसनग्रहणमिव कन्धरोद्धरणमादावङ्गेष्वक्रान्तकर्णश्रवणतामकरोत्, आत्मजप्रभाव-श्रवणसुमती कृतार्थमात्मानं मेने(?) । देवोऽपि कालिवर्षामिव शङ्करः सरस्वतीं प्रतिजग्राह । भगवांश्च वामदेवो .......[6] सपु .......[7] वर्थं विनय-निभृतमनुगच्छन्तं विसृज्य राजानं निजं तपोवनं जगाम । दम्पती चाश्रमं

1. Space for 8 letters left blank.
2. L. about 3 letters.
3. Space for 12 letters left blank.
4. „ 12 „
5. Space for 7 letters left blank.
6. „ 3 „ .
7. „ 6 „

जग्मतुः । तनयाभ्युदयचिन्तया मोदमानौ मुहुर्विरहोत्कण्ठया दूयमानौ मुहुः प्रयाणमङ्गळानि सम्पादयन्तौ मुहु[1] ........ मन्यम[2] ..... मुहुस्तेषामाजनुश्चेष्टितानामनुस्मृत्या रुदन्तौ मुहुरप्रमादं शिक्षयन्तौ मुहुर्देवताभ्यः क्षेममाशंसमानौ मुहुर्दर्शनागतानामृषीणा[3] ...... .... दिवसशेषमनयताम् । व्याघ्रदमनो[4] ..... नृपुत्रदारस्तं वृत्तान्तमुपलभ्य स्नेहद्राविताल्मा यत्ननिरुद्धबाष्पगद्गदकण्ठनिष्ठ्यूतैस्तैरुपस्तम्भनवो[5] ...... अथ चक्रवर्तितेजोग्निकानिकषावबद्धरोहिपूरजेतस्विकक्षकवाळैर्भर्तृसमागमोन्मुखीनां दिग्वधूनामास्यसंस्कारधूप इव धूसरितनभसि जायमाने नदीयमसि स्रवमाने चूडामणिचामगिकायामकरिणीमिव यामिनीमुपस्थायपयत्याहरन्तसमये यत्नानितयथोचितनियतः क्षामः क्षामक्षेमा क्षौमकोमळमाप्रमाणागणपुळिनमध्यासीनं स्वगणेन नरपतिं परिवारयाञ्चक्रे(?) । चिरञ्च किञ्चिद् ध्याय(न्निवर्तिनि?न्तीव निर्नि)मिषनयना स्थित्वा मुक्तदीर्घनिश्वासा पुत्रमाललाप । तात! जनयित्रीभिः सर्वदैव सुनुशोचनीयां विशेषतः प्रवसन्त इत्यस्यां लोकस्थित्यामुदिदिक्षमशक्यस्यैव निर्वोपुः विवक्षितविचित्रदृणमस्य मे हृदयं किं वा परेणोपदेश्यं, दृश्यते एष यत्नश्चोद्यते मान्यो मित्रवर्गो इति उपदिष्टे पिण्डक्रमस्तवात्ममानो न दुर्बुद्धिर्विहरणीयमिति निसर्गत एव सुखानिबद्धालयो किं मया भुवनभूतये भवन्तस्सञ्चरन्ति(?) । स चेन्नियोगतः किमुत वज्राचलकदर्थनोचितस्थैर्यसम्भारभाजनैर्भवद्भिरुदयदश्रुबिन्दुसन्तानसक्तिनान्तपक्ष्मा शुष्यत्क[6] ............ य

1. L. about 10 letters.
2. Space for 6 letters left blank.
3. L. about 18 letters
4. Space for 6 letters left blank.
5. L. about 20 letters.
6. Space for 13 letters left blank

उत्तानशयो यः कलप्रवावीर्यो कृपावन्नाश्रमहरिणपोतकाय आषाढी मोखलीर-श्चेदानीं विदितवेदितव्यो वर्तसे सर्वावर्तस्थः सम एवासि स्नेहमपास्य निर्वि-वेकस्य स्त्रीहृदयस्य ........[1] नेदानीमभिहृतममृतमिवाभ्यवहार्यं प्रवासे त्वा प्रीणयिष्यति ...[2] चिन्तयति सत्यप्येव श्रुत्वापि तथा तथवचोभिः प्रवासः प्रवासमिवासुभिस्त्वमग्रजविरहमविषह्यं विषह्यदत्त ........[3] यस्याः स्फुटन्तं पुटपाकमिव शोकशापवत्यकस्मादङ्ग .....[4] तो त्वया च त्वत्सुहृद्भिश्च परस्परसुखबलात्काराकृष्टपीतौ तदनुवृत्तद्रावितहृदयानापकारपयोधराविं दृश्यपि ........[5] सानमभ्युदनुजाने पुनर्दर्शनाश ........[6] बलानां चासूनां न कथञ्चन खण्डनीया मनोरथा इति पर्यश्रुणा मुखेन पादयोः पिपतिषन्तीं मातर-मतिसमग्रं गृहीतहस्तद्वयो यन्त्रित इव किञ्चिदं ........[7] स्तोयव ........[8] व्याजहार(?) । किं फलमम्ब! वैक्लव्यमेष धर्मः प्राकृतप्रकादानां यदेवंविधेषु वैधुर्यमाया खलु धैर्यमेवावकाशेऽपि शोकस्याश्रयति, स्मर पृथा सा प्रस्थितेष्वपि वन ........[9] योदश समाः समाधिमास्थायास्थितारातिनगराय, अक्रमत्रा-प्य(त्य ?)पायशङ्कया वयस्यवर्गपरिवृतस्य हि मम सेयमुद्यानविहारवर्णपुष्पोद्भवा-नाम पितरो मातरश्च कियति कियति ....[10] स्ववर्तन्तमा ........[11] कथयतामवो मुहुरस्याभिरागमितास्तदग्रे सर्वकृतानामद्विष्या भव पत्नीरपाराचरापारपातिनो

1. Space for 12 letters left blank
2. L. about 2 letters.
3. Space for 12 letters left blank.
4. L. about 4 letters.
5. Space for 12 letters left blank.
6. L. about 4 letters.
7. Space for 8 letters left blank.
8. L. about 4 letters.
9. Space for 14 letters left blank.
10. L. about 2 letters.
11. Space for 8 letters left blank.

गुरुजनस्य(!) । यस्य ममाग्रगञ्जखयाहंसापनीतः तस्यापि (कि)ल दर्शनो-
[1]
त्सवक्षरतोऽस्म ........ तथा यथैतदेवमेनमर्थमभिसन्धायसि प्रवसतोऽस्मान्
भगवत्पादाराधनसुखं ऋषिपुत्रकुमारगोष्ठीविनोदितस्तातस्य च तव च पाद-
[2]
शुश्रूषारसस्तातसुतामात्यादीनां विवानिशमुपदेशाम् ...., नान्याग्रदमनयोरस-
कृदालोक(ले ! ने) प्रीतिरिति कतिपयदिनदुर्लभायमानमपि नैतत्सर्वमुत्सुकयति ।
[3]
अस्मद्वियोगोत्सुकखप्रतिक्रियार्थं चोपस्थित एवैष सिंहदमन इति .....
मन्यत्र सपुत्रदारोऽभ्यगच्छद् ध्याग्रदमनः । सोऽब्रवीत् । देवपादपङ्कजयुगळ-
मूने न मातरं पितरमन्यमन्यं वा बन्धुमपरं वा दैवतमनुजानाति जन्मनः
प्रभृति सिंहदमनः । तस्यैव च पादवनादनुग्रहाञ्जलवृत्ति तिविसर्गनिष्कलङ्को
जलधर इव धवलीभूतः सोसवनादिष्टेऽपि यत्र यत्र भवदीया पतीति
पादपद्ममात्रे तत्र प्रथमसन्निहिता सिंहदमनमधुकरोपचारणीयो यदि तपो-
[4]
वनपरिपालनाय यदुक्तमात्येव कश्चित् कन्दमूलकखननकण्टके ........
विनतिक(ति !)मित्यतीत्यनवसितवचन एव भर्तरि संरब्धेव किञ्चिदभ्यधत्त
[5]
विन्ध्यसेना(!) । क्व यायमय देवस्य दशकुलकुटुम्बपक्षपातित्वं क्व ........
[6]
तात्रयमनुग्राह्यपक्षं देवस्य दैवह ........ केन जितमजान्यवृत्तिभिः पुष्करे-
[7]
रित्युदश्रुमुखीं मातरमुवाच सिंहदमनः । किमम्ब रोदिषि ........ त्वामनुपतन्ति
[8]
चास्वामिनमर्थानर्थं चिन्ताविक्लवा खलु तिर्यग्धर्माणि नो जातिरातृ( ! ) ........
मोरप्रगमनायेति क्षुभितेषु च तेषु लज्जास्पृष्ट इव किञ्चित् क्षणं तूष्णीं

1. Space for 12 letters left blank.
2. „ 8 „
3. „ 12 „
4. L. about 13 letters.
5. L. about 20 letters
6. Space for 6 letters left blank,
7. L. about 16 letters.
8. Space for 7 letters left blank.

स्मित्वा प्रीतिस्निग्धेन चक्षुषा क्षालयन्निव सिंहदमनस्याननं प्रण(य)कोपकालुष्य-माललाप देवो राजवाहनः । सखे! मा स्म त्विदमन्यथा श्रुतं (रु? कु)तश्चिद [1] ........ च चित्रां कथां कथयन्ति वृद्धाः त्रिकायसहत(?) पितामहेन मे चण्डकृष्णः । तस्य सूनुरपर इव कालः कालदण्डनामा मालवेषु चण्ड-वर्माणमाश्रित्य तदनुजानामेकादशानामुपबलमुग्रवर्माणमटवीमर्दनाय लब्धवाय-निर्गमिव [2] .... ..ति न हि बुभूषवो द्विषोऽवजानते तच्चेदरिबलमुपनंस्यति उप-नतयायुधस्पर्शतयानुगुरुपानामोकस्यै तातव्याघ्रदमनस्योपरिभवो भविष्यति(?) । स्थितेषु चास्मास्वीदृशेऽर्थे यदि वृद्धा व्याप्रियन्ते किमेभिर्लोहस्तम्भदीर्घस्तम्बै-(र्बाहु?)र्बाहुभिः बलिनो धन्वि(नेना?नो)ऽप्र(म)त्ताः सत्त्ववन्तश्च न सन्त्येवान्य-भूमौ प्रायशो भवादृशाः । त्वयि स्थिते निश्शङ्कं शक्यते गन्तुम् । गतस्यापि न मे सुहृद्गणभुजवज्रपञ्जरगतस्याशिवाशङ्का तदप्रियेऽपि मद्वचस्यपि त्व पुनस्त्वमेव मा [3] ........ वां चानुनेष्यसीत्यनुत्तरं तमकरोत् । एवं तैस्तैः प्राप्तकालैरालापैः पूर्वमर्थं प्रतिशय्य शर्वर्यां सर्व एव शयनमन्वतिष्ठन् ।

अपेद्यु(रन्वि? रुन्मि)षति मत्तपीनचीरण्डिग [4] .... कलत्विषि [5] त्रं च .... कवालचामरत्विषि(?) ध्वान्तदुर्विलासमुषि कुमुदवनप्रभासद्रोहिणीरदोत्थितमुक्त-पङ्कजव्याकृतमुखपीनकोमलोष्मणि भौमौत्सुकचक्रवाकपूक [6] .... ... षि भुवनभूषणे पूषणि पुरुषसिंहः पुरोहितस्तम्बेरमरोहिणीविषाणकोशावर्जिताभिराज्यबिन्दु-चन्द्रकिणीभिः क्षौद्रवेशलाञ्छिताभिरद्भिरभ्युक्षितमौलिर्न [7] ........ समुपस्थाय

1. Space for 5 letters left blank
2. ,, 5 ,,
3. L. about 2 letters.
5. Space for 4 letters left blank
6. L. about 6 letters.
7. ,, ,, ,,

देवं सवितारमभ्यर्च्य भगवन्तं भापापतिमितराश्च परिवसित्वा देवता जप्त्वा बहूनि जप्यामिहुतमतिसमाहितेनाथर्वणोऽनुपहुतामिराज्याहुतिभि(!) ...[1] ... लाल-मिव प्रदक्षिणावर्तितशिखाकलापजटिलाग्रं धूमोद्गारितयैव सूचितसुकृतपाकं राज्यचिह्नसन्तर्पणायेव हयगजध्वजातपत्राकृति दर्शयन्तमविस्फुलिङ्गमजेर-मवदात ........[2] र्णं हिरण्यरेतसमतुलभक्तिः प्रदक्षिणीकृत्य शुक्लमाल्याङ्ग-रागवासास्सह समानवयैः सुहृद्भिरिन्दुगभस्तिभङ्गसिद्धमिवामृतसुरभि सौरभेयीक्षीरेणानुभूयमानबहुलमनवगीत ..........[3] .... व्यञ्जितमावर्भितरसनेन्द्रिय-मक्लिष्टशुद्धिकर्णकं पयोऽखण्डपाण्डुसिकतक्षरूपं पररसम(न !)भ्यवहृत्य पीतधूम-वर्तिराचान्तो गृहीतवासताम्बूलोऽभिवन्द्य भगवन्तं वामदेवमन्यानपि तपोधना-(ना)श्रमाधिदैवतान्यात्मनश्च गुरुजनमागामिसम्पत्सम्पादिनीराशिषः प्रतिगृह्णन् अप्रतिरथं जपद्भिर्देवरक्षितप्रमतिमित्रगुप्तादिभिः सवयोभिश्च मुनिपुत्रैः परीतः पावयन्निवान्यदुर्नृपोपभोगपांसुलामिळां (भव ! इभ)पतियातलीलाविलम्बिभिः पादकमलन्यासैः स्निग्धगम्भीरपुण्याह(पो ! घो)षनिर्हारिणो निजमन्दिरान्महेन्द्र-द्वारेण उपद्वारनिहितरत्नगर्भमिथुनकुम्भपूर्णो नि(र्जि ! र्ग)त्य जायमानसौमनस्यः सौम्यां दिशमभिप्रातिष्ठत(!) ।

अथ प्रस्थितानां च तेषां दक्षिणतः कोऽपि ब्रह्मचारी ब्राह्मणकुमारः कुमुदोत्पलकल्हारहारिणि हरिन्मणिभङ्गवर्णवारिणि सरसि सारसावतंसे हंसपोताय स्वहस्तदत्तवन्यवर्धिताय शिखरस्तप्रपीडितेनाङ्गुष्ठमुखालपातिना बिसक्षीरेणानुतीरविरूढचरपद्मपत्रपुटं तमापूरयन् त्रिभुव(न)वैशब्यशालिन्या शरद्विभूत्या समावर्जमानदृष्टिरियं(!) वसन्ततिलकमुच्चैरुज्जहार —

1. L. about 6 letters.
2. ,, ,, ,,
3. ,, 3 ,,

सप्तच्छदस्तबकचामर(धूननोऽयं
जातो मरुद्वन)सितं वियदातपत्रम् ।
हारप्रसादिसरिदम्बुसरोजलीलः
कालोऽयमुद्भवति नन्दितराजहंसः ॥

इति । लब्ध्वेदं पादानिमित्तवृषभं चक्रमविरेपातटखननलग्नरक्तमृ[1] .........
रोपविषाणया सहेलमुद्गर्जन्तं सौराज्यारम्भहृद्धर्ममिव जातिधवळनिर्यायवन्दिमङ्गळ-
गीति(रि ? मि)व विजयशंसिनीं वल्गुमञ्जुळविहङ्गमविरुतिमाकर्णयन्तो गव्यूति-
मात्रमिव गत्वा समे सद्मे सारपति[2] ....... णोदके पुष्पफलसमृद्धसौम्यवृक्षमालिनि
वानप्रस्थानां सपत्नीकानां प्रतिश्रये त्रिफलपाणिभिः[3] ....... लिकाकुसुमदामभिः
पूर्णकलशपाणिभिः पुरस्कृतप्रदीपैरैन्द्रीणामृचां माङ्गल्यानाञ्च साम्नां जैत्राणां च
यजुषां पुण्यानां चाथर्वणामुदीरयद्भिः घोषाद् द्विजातिभिः प्रतिगृहीतप्रवेशः प्रीत-
पेशलाभिस्तापसानां[4] ... नामात्मनश्च सुहृदां विचित्राभिः कथाभिः विनोद्यमान-
स्तत्र तद्दिनमुवास देवोऽपि राजवाहनः । तस्मिंश्च वासरे सुमतिरि(द्ध ? त्थ)-
मात्मसुतौ प्रमतिदेवरक्षितावुपह्वरे समनुशशास— वत्सौ राजा नाम जम्भा-
रिजलेशजीविताधिपमनुष्यधर्ममार्ताण्डरोहिणीश्वररोहिदश्वश्वसनानां विश्वजनीन-
जन्मा सध्रीचीनो मात्रासमूहः । तथा हि स्थाने वर्षति सीमानं रक्षति शासनी-
याननुशास्ति स्वानामीष्टे काले तपति तप्तानाह्लादयत्यपङ्कं पावयति कर्मारम्भेषु
प्रेरयति । असत्यस्मिन् न स्मर्यंत धर्मो[5] ...वेदा नारभ्येरन् ईश्वरा नाराध्येरन्

1. L. about 15 letters
2. „ 5 „
3. Space for 6 letters left blank.
4. Space for 6 letters left blank.
5. L. about 4 letters

देवता न प्रीणयेरन् वर्णा नाद्रियेरन् आश्र(मा ! मो) न वर्तेत चातानपत्यवतीन्
1
परिचरेयु:(!) न भृत्याः स्वामिनाऽनुवर्तेरन् न पुत्राः पितॄन् पे ... गुरूनुपासीरन्
न करदाः करान् प्रयच्छेयुः, न च कालेनौषधिवनस्पतयः फलेयुः । अस्य हि
2
दण्डभयादस्खण्डवाहिनी लोकयात्रा । यदयं प्रातरुत्थाय धर्मा .... वृत्त्या समः
शत्रुपुत्रयोरादानमृणस्य निक्षेपोऽर्थानामस्वामिभिर्विक्रयः (सम्भूय!) सम्भूय समुत्था-
3
नमन ... तां व्यतिक्रमः क्रयविक्रययोरनुशयमस्वामिपालयोर्विक्रयः सम्भूययो-
4 5
रनुशयदस्वामिपालयोर्विवाद(!) ....... मृविप्रतिपत्तिर्वाग्दण्डयोः पारुष्य .......
स्त्रीपुंसधर्मो दायविभागो द्यूत(स)माह्वानमित्यष्टादशसु विवादपदेषु (शु!)देशदेवादि-
6 7 8
भिर्यथाभूतदर्शनादकृतं धर्मानु ....., प्रजा ...... तत्प्रत्यनन्तरं पद ........
म यत्र वयं वर्तामहे । तेन चानेन मन्त्रिणा त्रयी वार्ता दण्डनीतिरान्वीक्षिकीति
9
चतसृषु विद्यास्वभिविनीतेन ममग्रेण सर्वैः प्रजागुणैरनल्प ....... भीरुणा
स्वभावर्धातप्रवादवल्गुवाचिस्तम्भचापलालस्यानां कदाचिदप्यदत्तावकाशेन मैत्रेण
10
शुचिना महोत्साहेन सत्प्रियेण सत्त्ववता कृच्छ्रेषु प्रत्युत्पन्नबुद्धिना द्र ....
गेणो वैरायकेण( ! ) वशिना भर्तुरात्मनश्च धर्मार्थयोः प्र(य)तितव्यम् । अपि
चाविष्टायां भूमावनुज्ञया वश्यं समुदितासनस्थेन प्रश्नानुरूपं प्रियहितप्राय-
11
मभीकृताक्षिश्रोत्रो धर्ममपि प्रहो ह ........... मम्भाव्यमर्थधर्मानपेतमतिपरि-

1. L about 10 letters.
2. Space for 28 letters left blank
3. L about 17 letters
4. Space for 5 letters left blank
5. L about 10 letters,
6. Space for 4 letters left blank
7. Space for 8 letters left blank
8. L about 5 letters.
9. Space for 8 letters left blank
10. Space for 8 letters left blank
11. " " "

स्फुटं च कार्याणि कथयता सम्यग् वृत्तमनुप्रविश्य प्रोत्साहयता प्रमादेषु [1] मितं प्रतिषेधयता संवादमन्यैर्भेदं वानुपयता द्वेष्यादिभिरसंवर्जिनी ........ नन्याभ्यर्थिना सर्वदा सर्वत्र प्रेक्षाकारिणा दैवतवदमाययोपस्थेयः स्वा(मि ? मी) सर्वैश्च गुणैः सम [2] ............ गता भावसमुदेतारश्च यूयं यस्तु स दोषः सह-पांसुक्रीडया बालभावाहत्वेन च महेत्वोत्कण्ठादवगृह्य प्रचारबुद्धिरिति तदुभयं भयङ्करमावयमिव(?) [3] ......... ह्यासेवनीयः कुमारः सर्वैश्चायं महा-कुलीनतादिभिरागामिकगुणैः समग्रया चात्मसंपदादितस्वामीत्येवमेव चापरेऽस्या-मात्याः स्वान् सुतान् सन्तोषाद्गुणेषु [4] ......... त्रण कथं [5] ........... कुमारः प्रथम एव वासरे पितृपरिजनं द्वितीये परिचितान् मुनिपुत्रकान् तृती(ये) संहार्यं व्याघ्रदमनं चतुर्थे सहानुयात्रं सिंहदमनं निवर्तयितुमशक्नमासं चक्र-[6] ......... एव पार्श्वजाम्ब [7] ............ तभासो हिंगुरुकपुण्डरीकलक्ष्मीमुषः क्षौद्रहरिद्राभङ्गहरितालपत्रांसवर्णाभिरोषधीभिरुदकैश्चाशून्यपर्यन्तान् सहस्रवेधिनो रसांस्ताम्रपीतकांश्च र(सो ? स)धातून् कृसरमुद्गमाषप [8] ........ तानप्यपलाशशैवल-निशाहयानवर्षयकृत्प्लीहाभ्यांश्च दर्वीबिन्दुच्युति [9] ........ कपान् कनकधातून् पद्मपाटलीस्फटिकपारावतवह्निकण्ठमत्स्यण्डिकाद्यनेकवर्णान् रूप्यधातूनन्यनरेन्द्र-प्रार्थनीयानभिज्ञोऽपि सत्रकौतुकमवलोकमानो धृतिसंस्थिताविकटवंशपाङ्क्तिपांशु-

1. Space for 9 letters left blank.
2. L. about 2 letters.
3. „ 12 „
4. „ 26 „
5. Space for 8 letters left blank.
6. Space for 10 letters left blank.
7. „ 8 „
8. „ 6 „
9. L. 1 letter.

रनुवर्तिभिरनोकहैर्मनोज्ञमाध्वीज्ञानजीवञ्जीवकां कूजत्कोकिलामाघुष्टमुखरकोयष्टिका-
मागुञ्जद्भृङ्गजालामचलगुहामतिविशालामभितस्तटशिलातलरङ्कितपुष्पलिङ्गया( ! )
तुङ्गशृङ्गपतनरत्नोच्छ्रितप्रस्तरोच्चलितबिन्दुमालतारकितमूलया शैलकन्दरप्रतिरवो-
पबृंहितमातङ्गनिर्घोषानिर्झरिण्या परिगृहीतं कमपि सुचिरशून्यामोगमेकस्मिंश्च
सिकतिले वनस्पतिमूले प्राङ्मुखमासीनमक्षमालिकागणनया किमपि जपन्तमनेक-
व्रणाङ्किण(कने!)कर्कशका[1] ............... त्तराजिनवासितेक्षणापाङ्गमनस्संस्कारपरुषं
नीलकालमूर्धजमुग्रतपश्चरणरूक्षकालवर्णमुन्नतमुखपालितानुमेयद्विजातिभावं कमपि
चीरवाससं ददर्श ।

स च दृष्ट्वै[2] ....... त्थाय पाद्यमर्घ्यञ्च पद्मपत्रपुटेन स्वागताभिधानोपक्रम-
मुपजहार । फलमूलेन वनसुलभेन स्वादुना निमन्त्रयाञ्चक्रे । तस्य च प्रणय-
मनुरूपमखण्डयन्तोऽपि[3] ....... भर्तृभावाः सुचिरमैक्षन्त देवरक्षितं विधृताकृतयः
कुमाराः । स चैवमूचे— भोस्तपोधन ! सोऽयं प्रभावो यस्तिरश्चो(प ? पि)विस्रंस-
[4]....... तां परामुत्पादयति चिरदर्शनमपि नेतरत्र युज्यते हि क्षणदृष्टोऽपि निर्वि-
शङ्कमार्गद्रुमो नाम ग्रामसीमानिन्योपवीरस्थानं वृक्षस्तथा च दुराधर्षम[5] ........
पुमांसमापादयति स्वैरनियोज्यं जगतस्तत्क्रमस्थानुयोगा हि मार्षमार्द्रकौतुकस्य
हृदयस्य वपुरिदमद्यापि विप्रजातो जातिशुक्लया यक्षादिसुलभमनुपलब्धपूर्वमस्य(!)
पे[6] ........... श्चमत्कृतस्याश्चर्यमिव प्रतिसन्धानं ग्रावदवस्थानं च कारणं नाम

1. L about 7 letters.
2. „ 10 „
3. „ 18 „
4. L about 20 letters.
5. „ 11 „
6. „ 4 „

यदेव किञ्चिन्मिमिषीकृत्य गत्वराणां विस्मयस्थानमपि च विष(य)भोगप्राग्-भागे भरसहेऽस्मिन् वयसि स्मृतिविहितगार्हस्थ्यय [1] .... .......... स्थाय वन इह वानप्रस्थमेकाकी चरन् गुरुणा निर्वेदकारणेनोपतप्तो भवितुमर्हसि। न च तद्विचार्यमाणमनवसानं मरणमगतिः स्फुटं वा कः शरीरपात-प्रतीक्षं नरकदुःखं मन्त्रौषधिविद्वेषणम् अनूष्मदाहजपरोक्षरं मलमुपावृत्यमव-मानकोशं प्रसारितमविपस्यमुपचरितनिन्दामन्दिरमूर्च्छितो विषादध्वजः सलमं प्राणशल्यं सुनिहितो जुगुप्सानिधिमाकलितमलक्ष्मीहस्तसारमलच्छन्नदैन्यसर्वस्व-मखिलदैत्यकरतन्तुतारविस्मृतोपदेशो घोरतमः पापरोगः सकललोककुलीकरण-रन्ध्रान्वेषणैकच्छापाकजागरूकं दारिद्यं तस्य हि सन्निहितैव प्रतिक्रिया यदिमे विशदविकरणविशदैादुम्बराणां शतवेधिनां सहस्रवेधिनां चात्यन्त एव दृश्यन्ते काञ्चनिकारसानवनीतकपोतगोमेदकवमशुल्यकन्धायक्षैामोमाकुसुमवर्णाश्च ताना-शीलानैकलोकप्रभागर्भ धावतः(?)। तदेवम(यंनो?यत्नो)पनतेष्वप्युभयलोकसाधन-क्षेमेष्वदत्तदृष्टिरर्थेषु कमर्थमभिसन्धाय निष्ठुरेण तपसा कर्श [2] ... त्वा तु स विप्रः प्रत्युवाच— सौम्य सन्तोऽपि सम्पश्यन्ति गरिमाणमपरमार्थं परेषु चित्रमार्याणां भावास्तथा मयि प्रश्नानुग्रहो सुखमप्यपराध्यतात्मानं भवानप्यु [3] .... क्षरेष्व-स्मृतस्मृतिवेदेषु अश्रुतयज्ञ(पार्थे?वार्ते)ष्वनाघ्रातधर्मगन्धेष्वप्रसिद्धद्रव्यशुद्धिष्वनवे-क्षितभक्ष्याभक्ष्यचिन्तेष्वनवगते [4] ....र्यमात्रपण्डिते(ष्व?षु) काण्डपृष्ठेषु यत्नाधि-गतजातिमात्रस्मरणसम्प्रदायेषु वनचरतुल्यवृत्तिषु व्रात्येषु विन्ध्यपार्श्ववासिषु

1. L about 2 letters.
2. „ 12 „
3. „ 24 „
4. 20

शबरभावपिण्डास्वादरसानुसारिभिरिव स्वावैरेव भावैराका(रैर्वा ! रैः १)रिगृहीतेषु ब्राह्मणभुवेषु जातो मा(तः न ! तङ्गः) कृत्रिमग्रामग्रामणीभूतजरत्किरातनामधारो द्विजोऽस्मि । अहमेकदा कोदण्डपाणिरारण्यकैरमा चरन् परिपथं पान्थमेकं पलित-पाण्डरमात्मप्राणानुरूपयष्टयवष्टम्भसारिणं कर्पटान्तःपिनद्धनीवारकणमुष्टिमुटिका-भरपरिक्रान्तमन्दविक(मा ! मम)शीतिवर्षदेशीयं द्विजातिमासादयम् । अस्मदीयस्तु कश्चित् तेन दृष्टेन रैपोषं पु(ट ! ष्ट) इव हृष्टो लकुटमुपस्याभिहन्तुमभ्यधावत् । आर्तः सविषयानुभयकरनिरुद्धयष्टिशिखराबद्धश्लथशिथिललम्बचर्मवस्त्रासोत्तान-तारकत्वात् प्रत्युन्म(न!)महष्टिः प्रपत्नोन्नमितमूर्धा निनिद्विरिहचीनाङ्कुरारतजङ्घो विष्टभ्य कथञ्चिदेव पद्भ्यां तिष्ठन् पुत्र मा स्म हन्तुं गृहाणेमं स्वयमुन्मुच्याभिकक्षालग्नं धान्यमुष्टिमिति श्वासच्छिन्नवाग् ब्रुवाण एव निर्दयाभिघातपातितः प्रसभाकृष्यमाण-कर्पटो व्यवेष्टनर(!) जातदयः पुनरवारयम् । अपसर किमनया धान्य[1]... त्रकया कर्पटिकया वरजरद्विजान् गृहीतवान् यतः प्रभूतमन्विच्छाम इति । स मां निर्भर्त्स्याभ्यधत्त सत्यं सर्वावस्थमप्यकर्मण्यमेव ब्राह्मण्यं यदयमपि नाम मातङ्गको हस्तो घृणोपहत(!) ..[2] — भ्रंशयितुमिच्छति । तन्मूले च कलहे (ए)नमन्यां-श्चातता(यी ! यिन)श्चतुरोऽहमवधिषम् । हतशेषाः पुनरवयवशः सामर्षा विकृत्य मामगमन् । नागामहमभ्रंलिहदुत्ततोरणं हे(म)प्राकारमालमुज्ज्वल ...[3]न्मणिभवन-पङ्क्ति दृश्यादृश्यं दिव्यपुष्पं पुष्पोदकद्वारिनीरविहारचारितपुण्यतारुण्यसुन्दरीवृन्द-मनन्तभोगीयम् (!)। पुनरद(र्शयं ! र्शं) च महति सिंहासने निषण्णमेकतो दिव्याकृति-

1. L about 2 letters.
2. ,, 5 ,,
3. 8 ,,

.....[1] पैरुपास्यमानं धर्माधर्मदर्शनमिव कुर्वन्तं भगवन्तं धर्मराजम् । स मां सन्त्रासेन जानुशिरःस्पृष्टभूमिं वेपथुशिथिलाञ्जलियोगं श्लक्ष्णया गिरोत्थाप्य स एष सर्वयातनापार .....[2] कृष्णो (यस्य?यः स) पुरा राजर्षिणा रिपुञ्जयेन यथोक्तं शासितः क्षपितकल्मषाणां राशिः ससान्धिदानिमाशीतिकस्य(?) साधोर्वसन्तयाजिनः शान्तिपालस्यार्थे मुक्तजीवितो मत्समीपमायातवान् ........[3] हार्हो यत्र दुष्कृतिनः कुटुम्बिनः । तानिमान् (धर्म ? पद्म)महापद्मरौरवमहारौरव-सप्ततालकालसूत्रान्धकाराह्वया(मय?न्)महानरकान् विभागेन दर्शयित्वा विसृजैनं नित्योग्रमित्युग्रकर्मनित्यो ........[4] चित्रगुप्तवानीत्वाञ्चाहमित्थं चित्रगुप्तेन पात्यैतान्(?) परिचितं तव निरुपमानं दुःखसम्भारसम्भारमात्मम्भरिणामधीरचेतसां प्रेत्यभावप्रत्याख्यायिनां भगवतो धर्मराजस्य यातनास्थानम् । अत्र हि जहि जहीति जातक्रु(द्धात् ? धां) किङ्कराणां प्रलयमे(व ? घ)निर्घातवातभैरवैकभर्त्सितेन यान्यशस्त्रपात्यमनानारजेकाशानां वज्रकुञ्जकमष्टदष्टत्रदग्धादस्थिसाच्छेदनादुच्छूनेन चूत्कृतेन बन्धनयन्त्रसंवेष्ट्यमानाविग्रहाणामङ्गभङ्गविरावबृंहितेन हाहारवेण आमस्तकजघनसन्धब्रह्मसूत्रानुसारपाट्यमानानां पट्टसधाराद्विधाकृतेन, ईक्षणोद्धरणसंरब्धदक्षिणकररक्षःपादावष्टब्धवक्षसां सव्यकरनिकृतमनुवलीकृतगलघट्टितनिवृत्तेन निर्भज्यमानपरशुकास्थिपञ्जरझरझराशब्दसामान्यनिर्गमेन निष्टनितेन शिशिरजलप्रपाप्रनालीयाचनाञ्जलिहरपुलितचलितमस्तकानां पर्यस्तदृष्टिपातकोपितखरदुरुष्परिघमुद्गरमुसलगुलिक्षेपमुण्डागण्डपिण्डितप्रविसृतेन विक्रन्दितेन शुद्धगन्धशालिसिद्धवर्धितकण्वमानगन्धाभिद्रवणरुद्धनिर्धारितानां जङ्घा-

1. L. about 7 letters.
2. „ 10 „
3. „ 7 „
4 „ 4 „

जानुभङ्गझटझटारटितपटुतरेण पतनकोलाहलेन, अलीकपाककर्कशजिह्वाजिह्वोद्धरण-प्रकटकण्ठमार्गनिर्बाधनिर्गमानां रक्षःकटिरुद्धदुष्कृतिहासितसहस्रत्रसिष्णोमसुमिताना प्राणपक्षमानां निष्पोतध्वानितेन, हस्तदत्तसिकप्रपिण्डपत्यासेपरोक्ष्य सन्धुक्षिता-क्षुद्रक्षुधालुक्षानां ........[1] नमिव च न ....[2] जृम्भिताध्वना रु(मि?|दि)तध्वाने-नाप्राणिवैरूप्यदानदर्पिता(नो?नां नै)कसत्त्ववधानुबन्धिनां सन्ध्यस्थिकठोरकाषाय-कुण्ड ....[3] पार्श्वपाणिपादक्षोदनादेन, परिष्व(गे?ङ्ग)गेमयपलायमानपारदारिकानु-धावतीनां छत्रकळत्राकारदीप्तलोहपुत्रिकाणामुद्घाटितपूर्ववृत्तचित्रकन्दर्पचर्यरविस्ता-रेण प्रकटीकृतप्रणयकोपप्रसादनप्रक्रमेण मर्मच्छिदा कदर्थिना प्रजल्पितेन तप्तताम्रद्रवानुपातदीप्तायोगुलुकफलभक्षितोत्थितानां परमर्मस्पर्शदुर्भाषितपुरुषबहु-भाष्यभाषिणो मोषाद्वारप्रकारकलतल्पवामपार्श्वशयनविजृम्भितेन वसामेदस्नेहम-सेकोद्दामधूमळसम्भारगर्भोच्चतेन दीर्घशूलकृतेन वृकवराहसिंहव्याघ्रवार्मि(ह?)महिष-कुलकोष्णिकावलुप्यमानसर्वावयवानां मृगवनविहारसिंहिकानामसङ्गेनारम्भितेन वनदहनविसर्गशीलानाम् अनलजालगर्भाशयचिबुविविस्फूर्जितरवेण चारतविविध-चतुराणां वर्षसहस्रान्धकारकुहरमासदुःखानिस्सहविसृष्टेन विपरतापनपण्डितानां उद्योत्सर्पसर्पहरितमज्जनावर्जितनिमज्जितोन्मज्जितानाम् अरुन्धकरणभङ्गलिचपिला-लिखया खजमथनगोरसचोरघोरारजरकलकलेनासिताळवनपत्रपात्रोत्कृत्यमान-चैत्यच्छेदकाङ्कच्छिकृतेन धर्मकृततटाकनाशकनरशनभीमतैलिकयन्त्रान्ति-चित्कृतेन शौचाशौचविचारमशून्यदुर्मानुषममलससरित्तरणास्फावाचाळपाल-शैवालजालजटिलपूगवीचीपूगवेग ............[4] भशब्देन क्षुत्सन्धुक्षितप्रकाचि-

1. L about 20 letters.
2. Space for 8 letters left blank.
3. L. about 18 letters.
4. „ 6 „

ेन्धनसमवसारवोदरान्धवधिप्रक्षः सहस्ततालपटह-ध्वानेसनसनस्याद्रशनप्रागृनासक्तसूचीगळ[1] .......... रोक्षाभिहन्यमानोदर-मृदङ्गनिस्वनेन च ब्रह्मस्तम्भसीमस्पृशा भिद्यन्त इव नित्यश्रवणकर्कशान्यस्माकमपि नाम श्रवणरन्ध्राणि(?)। अपि च प्रतीतान्येव ब्राह्मणवधः सुरापान[2] ..... स्तेयं गुरुतल्पगमनं पतितसंप्रयोग इति पञ्च महापातकानि त(त्रै ? त्र) ब्रह्महणो (न?)वनकुटीग्रामसीमशून्यगोव्रजवृक्षमूलानामन्य(तम)वासिनो वापितशिरसः शव-शिरोध्वजा[3] .... शचरितवन्तो भैक्षान्नं गोसवेन स्व(ञ्जित?जिद्)भिजिद्विश्व-जिद्भिरश्वमे(ध ? धे)न (तृव?त्रिवृ)स्तोमेन वा निष्ठु(ते?रेणे)ष्टवन्तो गृ(हवो?हं वा) सपरिबर्हं धनं वा जीवनक्षमं सर्वमेव वा स्वं विप्राय विदु[4] ...ननाभिभुजः सरस्वत्या प्रतिस्रोतोनुसारिणो न त्रिरधीतवेदसंहिता नतिचित्रभानौ समिन्धत्यावाचीनशिरसः पतिताः न विधिवल्लक्षभूताः शस्त्रिणां न गोब्राह्मणकृते विक्रम्य सि[5] .......... बहुप्रकारमोहिता मृता वा न च ब्रह्मक्षत्रसंसदुद्घोषितापावा नोऽश्वमेधावभृथ-स्नाता यान्त्यन्ते तु सर्वयातना हि दुर्मतयः। तथा हि दहनजिह्मणदंश-जालजर्जरास्तीक्ष्णोन्मुखरोहकर्णस्थलाकृष्टिपृष्ठकशेलुरुशार्कराः कर्करकरतलोच्चल-च्छिलाङ्कारपूर्णवरुणदुर्दलितैः मरुमरुद्भिरप्यसहिष्णुभिरेवोष्णमावेगावतीर्य-माणोष्ममांसतकुलधूलधूलयो निर्वृक्षक्षुपप्रच्छायवार्ता निष्प्रतिक्रियक्षुत्पिपासाश्लेषा-माकर्णपथात् क्वचित्फुल्लोत्पलकमलकल्हारहारिण्यो वारिदीर्घिका इव प्रतिहायः पुनरमीषामभिष्यणाद्विषणह्यतृष्णाबलप्रधाविताः तामसाविभूतय इवानुपयोग-क्षमाणारक्षारा दूरोद्वेजनीयाश्च जायन्ते(?)। तासु च नरकपालबलात्कारा-

1. L about 6 letters.
2. ,, 4 ,,
3. ,, 4
4. L about 6 letters
5. ,, 4

गुर्वलीकनिर्बन्धाश्चेत्येषामपि यथोदितमता निष्कृतिकलुषाणां व्युष्टयः । तथा तु गुरुप्रतिरम्भणादविज्ञातगर्भ(गा ! र्भा)तनादात्रेयीवधाद्ब्रजराजन्यवैश्यपवि(श)सनादनृतवादात् साक्ष्ये च निक्षेपहरणादकुनावधाद् दुःखायन्त एते दुर्मतयः । सुरापाः पुनरेते न तामेवाग्निवर्णां पीतवन्तो न तथा (स ! त)प्तगोमूत्रं गोमयरसं पयो घृतमुदकमेव वा परिधाय प्रवितानज(गा!टा)धरा ध्वजवन्तो बाल(साससं ! वाससः) कणेन पिण्याकेन वा निशि सकृदुपयुक्तेन नीतवन्तो वर्षं ब्रह्म(ह)ण इवोपक्रमन्ते । सुरापकल्पाश्च निकृतयः कूटसाक्षिणः सुहृद्घातिनो वेदनिन्दका दुष्टाभक्ष्यभु(ज)श्च दुश्चरितैश्चिरमिहैव जायन्ते । ते चैते सुवर्णतस्करा नरवाजिरजतवज्रमणिमहीमन्दिराश्वजनिषु कल्प्यमानमकृतवन्तो ब्रह्महत्यानृतं वा अनुपोता उत्पश्य यदनुभवान्ति(!) । गुरुदारान् मित्रदारान् पुत्रदारानन्त्यजाः कुमारीमात्मयो(न्या!नी)श्च ग(त्यात!त्वा) स्वयमुत्कृत्तलिङ्गबीजरञ्जिताञ्जलयो नैर्ऋतीं दिशमाशरीरपातादजिह्म-

[1] . . . . तप्तायोमय . . . . .[2] नशायिनो मूर्तिमर्चिर्मयीं प्रियामिवाशिथिलमाश्लिष्टवन्तो न चीरवासिनः खट्वाङ्गिनश्च प्रलापप्राया वन्यैर्निर्जने वने वर्षमेकमुषितवन्तो न यवैर्मवि . . . .[3] मासत्रय. . .[4] श्चान्द्रायणं पञ्च एते परिपतन्ति घोरासु कारणासु । गोघ्नाश्च इमे न मण्डगोमूत्रेणपायिणो(!) हतगोचर्मसंवृतावयवा (सामा!मासं)यव(य!)म(का!क्षा)रलवणसितमश्नन्तो गोष्ठशायिनः शयानाः प्रस्थिताः स्तिष्ठन्तीश्चरन्ती सर्वशक्त्या सौरभेयीः शुश्रूषमाणा मास(तुला ! त्रया)न्ते च वृषभैकादशाभिः (श्रो!गो)भिराराध्य द्विजानात्मानं पावयितुमेच्छन्त्येव रमणीयानि कर्माणि । तदेवेदं गोहत्याव्रतमपारयन्तश्चरितुं चान्द्रायणं वा । सर्वे पङ्क्तिदूषकाः स्वानुरूपैः कर्मभिरत्र संविभज्यते । त इमेऽव(तिणी!कीर्णि)नो न का(रं!ण)-

1. 2. The two lacunae cover about 12 letters.
3, 4. ,, ,, 44 ,,

गर्द(भोष्ठ?भेष्ट)निर्कृतयो मरुदिन्द्रबृहस्पतिपावकेभ्यश्चाज्याहुतितर्पितेभ्यो न प्रत्यानीततेजसः त्रिषव(णाय?णोप)स्पर्शिनश्च न गर्दभा(भिज?जि)नवा(मि?सि)नः स्वकर्मकीर्तनोपक्रमं सप्तागाराचरितभै(क्षान्?क्षाः) कर्तॄणामपि भयङ्करीभवन्ति ताराणाम्(?)। तथा च द्विजरुजाकरणम(स्ते मवयमा ? भ्रेयम्ना)तिरङ्गनावत् पुंसि वृत्तिर्नित्यजिह्मतेति जातिभ्रंशकरेषु सान्तपनप्राजापत्ययोरनाचर(णां ? णाद्) (वा? स्वगा)द्विवधे च मलिनीकरणनामसु त्र्यहं तप्तयावकानुपयोगादिमे महत्यामापदि परिभ्रमन्ति । सुवृत्तक्षत्रविट्छूद्रवधेषु च वृषभोत्तरं सहस्रं शतं दशेत्यशक्त्या गाः प्रदातुं ब्रह्म(ह)व्रतं वाप्येकमब्दं षण्मा(सानती ? सांश्री)र्णवन्तः तरन्ति तानि तानि । चाषविडालनकुलभेककुररीकाकोलूकगोधावधेषु शूद्रहव्र(तं त्रि)रात्रं वा पयःपानमुपस्पृश्य वा स्रवन्तीषु चाप्सूक्तजपं योजनं वा गतिं कृत्वा, षण्डस्य वधे (समीसमाषं ? सीसकं माषं) पलाल(गा ? भा)रम्, उर(व?ग)स्याभ्रि कार्ष्णायसीम्, उरणं छागमनड्वाह(मेकहा)यनं रासभस्य क्रव्या(द)मृगाणां धेनुम्, अक्रव्यादानां वत्सतरीं, (कले?क्रमेल)कस्य कृष्णलं, सर्पिष्कुम्भं सूकरस्य, तित्तिरोस्तिलद्रोणं, (किल?कीर)स्य द्विवर्षं वत्सं, क्रौञ्चस्य त्रिवर्षं[1] .... बर्हिभासश्येनवानराणां रोहिणीं, वासो वा(हि?जि)नः, कुञ्जरस्य पञ्च नीलवृषाणीति विप्रेभ्यः पापनिर्णाशाय दत्त्वा कृच्छ्राणि चाचरित्वा। अस्थि(ति?)मतां सहस्रे (शकट?)शकटपूरणस्य[2] .... तरेषां हते समूहे शूद्रहत्याशुद्धिमननुष्ठाय निष्ठुराणां किङ्कराणामस्त्रहस्ते पतिता बहुच्छलप्रकाराश्च कारवो रज(क)रुक्मकरकर्मारमेत(?)कुलालकुट्टाकप्रमुखाः सर्वे च तन्त्राध्य(क्षा)स्तदन्तेवासिनश्च पशुपालवत्स(ल?)पालासि(न्धार?धाव)क-

1. L. about 7 letters.
2. „ „ 3 „

दोहकघृतमन्थका द्रोणमायगाढग्राहकघटिकाच्छेदकपेयालमालेयकशलाग्राहका उदग्राहकलक्षकाशासकनिर्यामकादर्शनाबीरकाः कार्तिकतरुककारतन्त्रचापदेवतट-कौशेयवायकदुकूलवायकाः शौण्डकासविक्रापयातकरिणान्यकराः कनकधमक ....[1] रकपूतकव्याघातकधातुदर्शका विशिखोपथिकशुल्कादायकमायकोमायका इत्य-सङ्ख्येया नृशंसव्यापृतका यथायथमनुभवन्ति स्वबुनेयानां जनिविशेषतः पुनः पानविक्रयिणो विजितसौम्या बहुरसोऽयं फलासवः पुष्कलोऽयं पुष्पासवः सुरभिरयं सुरासवो मधुरोऽयं मध्वासवः काम्य एष कषायासवः कल्यता-करण एष काशमय्यासवो सुधायुरिमं मूलासवं पिबतां भग्नोऽयं भग्नकुण्ठ-भयो भल्लास्वातकाकथ्यामितश्रेयः कपित्थशकलिकयादमृतमेनमाहुः स्थूमलक-शकलीय एष राजपेयः कदम्बशकलीयो बलकरोऽयं पुष्पासवः सुरभिनभ्रंबाः पातीयः परिपन्थ्येष सर्वामयानां पलाशभङ्गनिष्कपाटीयः कः क्षमोऽस्य गुणकथने कपित्थभङ्गनिष्कपाटीयस्येति बहु बहु प्रलोभ्य पाप ........[2] पितवन्त ........[3] इह पर्याकुलाः प्रक्वथन्ति का पुष्पाणि(?)। ये पुनरखिल-काळीयविकारकोशकालायसकरण्डकाः क्षत्रशब्दविडम्बका विषयविषग्रासलेश-लोभो ....[4] दूरमोहिता हितैषिभिः कर्णजप्यं मौनमाकर्णयन्तो मन्त्रभूयःप्रबोध-दीर्घनिद्रयाश्लिष्टा घटाभिषेकक्षालितमूर्तयोऽपि जनिताशौचाः शोचनीयभूतयो दारुणपटहघोषोद्वेजितश्रवणा लोकाक्रोशहेतवः प्रबुद्धजननिर्वेददा(लि ? यि)नः प्रतिभयदर्शनाः पृथजागानुगमनोचिताः पुरस्कृतात्मदहनतेजसः कृतकपटाव

1. L. about 2 letters.

2, 3. The two lacunae cover about 12 letters

4. L. about 18 letters.

गुण्ठनाः कठिनक्रमकरबद्धसङ्कोचितप्रकृतयः प्रतिपन्नचेष्टात्रिषयाः काष्ठाधिरूढ-स्तम्भदूषितकरणाहरणमात्रवृत्तरीतयोऽत्यन्तपरप्रणेयाः पतितमप्यात्मानमपि न जानन्तः परिचितानप्यनवेक्षमाणा दुः(ख)परम्पराधीनमातापितृप्रधानमपि स्वजन-(मा?मना)श्वासयन्तोऽसहन्तो देहिवाचमहमपि त्वत्प्रसादयोग्यः सकृदपि दृष्टिदाने-नानुगृह्यतामयमनन्यशर(णेण?णो) जन(न?) इति पर्यस्तशिखे शिरसि निष्कारण-विरचिताञ्जलेराक्रान्तोऽपि हतकप्रत्याशात् पारोधिनो भृत्यवर्गस्य शृण्वन्तः क्षाम-मलिनवर्णाः कदाचिदप्यनुपजातवृत्त्यावृत्तयोद्वीरस्थानापविद्धविग्रहा विपन्न-सत्त्वयोगा विदाहरूढमिथ्योष्माणस्त्वन्वयधूमकेतवः कतिपयप्रोक्षणावस्थायिनः प्रतापेन प्रज्वलन्तः त्रीनपि स्वानुरागिणीरनुव्रतामरयन्तो(?) विलोमतां गता विघटमानसन्धयो भिद्यमानान्तरङ्गा निरर्गळप्रवृत्ताङ्गजन्मानिस्सारीभूता भूतिमात्रभाविनः प्रत्यासन्नजनाञ्जलिप्रतिग्रहाभिलाषिणः प्ररुदितप्रजादुःखोपहृत-बलिपिण्डलब्धवृत्तयो जीवदवस्थायामप्यनात्मवृत्तयः प्रेतनिर्विशेषाः क्षत्र-बन्धवस्तेऽमी यथोक्तगुणिनो दुःखपूरेष्वपार ............[1] षु महानरकेषु सह सर्वदुष्करकपटोपदेशनिर्घृणैरसङ्ख्येयसमुद्रशङ्खपद्मशङ्कुपर्वनिखर्वन्यर्बुदार्बुदानि सङ्ख्यावच्छिन्नानि सहस्राण्युषित्वा पुनरस्मिन् पद्मनरके जन्म मानुष्यकप्र-[2]........ नतिभिन्नं मन्यन्ते । यमपुरुषाश्चात्र कासवमधुप्रतिश्यायदयकपास्तां मम कनकप्रतामनादयश्चापायुजाः पानरोगमुखाश्च पायुमूलामहाः सर्वप्राणिसंहारिणा ज्वरेण[3] ..........लोलयन्ति रक्षांसि च दारुणानि च(?) । त्वयाप्येता

1. L. about 5 letters. 3, L about 10 letters
2. „ 4 „

यातना: सहस्रशोऽनुभूता: तथेदानीमाचर यथेह पुनर्न पतिष्यसीत्य-
भिहितश्च भीतो हृषितरोमा (हंदयम ? हन्ताया)हमनुगृहीतश्चास्मि यदेवं
प्रभवतानुक्तं[1] ........ पुनरहमपदिष्टो नित्योग्र इति भगवता धर्मराजेन तन्मे
भगवत्प्रसादादवजिगमिष्यासुलभानुक्रोशदत्ताश्वासं हृदयमित्यञ्जलिमुपरचयतो
स(मा ? मे) समभ्यधात् ।

अस्त्येतदमूढ् विदर्भो(दत्त?पान्त)वासिनः पुलिन्दानामीश्वरस्य हालभालि(का
?कना)म्नः कोलाहलिकना(म्नः?मा) चौर्यापहृतः सुतः । स जातु सगणः स्वधर्मानुष्ठायी
सह बध्वा काञ्चिदार्यविधवामध्वनि प्रत्यरुन्धत् । सा त्वनाथा हा ना(थ!) दीर्घद(र्शी
? र्शिना) देवेन सता कथं न दृश्यते कलत्रमित्थमापद्गतम् । हा पुत्र ! (नीत्वो ?
नित्यो)ग्र ! ईदृशमप्यपत्यं लब्ध्वा किमीदृशी न ह्रीमनुभवनीया(? ) हा पुत्रक !
महोग्र ! मात्रा सह परित्रायस्व भार्यामि(त्रा ? त्या)र्तनादं व्यसृजत् । अनन्तरं च
व्याघ्र इव कोऽपि कोपात् प्रज्वलन् अधिज्यधन्वा युवा तज्जनसमूहमभ्यद्रवत् ।
तं च कोलाहलिकं च रूपतो विवेक्तुमक्षमा मुह्य(न्त इ?न्ती)व क्षणम(ण्डुम् ?भूत् )।
पुलिन्दपतिस्तु तां स्त्रियं सपुत्रस्नुषां समाश्वास्य कोऽसौ दीर्घदर्शी नाम कश्च स
नित्योग्रः का (स चसिक्तत्थ ? चासि कथ)ञ्चे(दां ?मां) दशामारूढेत्यवशङ्कित्रचेताः
सदयमन्वपृच्छत् । सा किमपि प्रस्नुतस्तनी पिब(न्ति?न्ती)व तमतृप्त(त?)या दृशा
प्रत्यवोचत् । जात ! जा(ले धन?लन्धर)स्य नाम कुण्डिनपतेरुत्तमामात्यः स यथार्थनामा
दीर्घदर्शी । तस्य महाभागस्य मामवेहि मन्दभागां गृहिणी(यमार्य ? म् । मय्य)भूतां
सुतौ यमौ नित्योग्रो महोग्र इति । आद्यः कश्चिदाजीवकश्रवणस्वतन्त्रोऽयं प्रभुः
भाविताविष्टवान् नष्टश्च सो(ष?ऽष्ट)वर्षस्तेष्वहस्सु रक्षादोषादारब्धाक्रन्दानि च

1. L about 5 letters,

निगूढैवं बोधितास्मि भर्त्रा भद्रे ! मा स्म नः कृत्स्नं कुलमेकस्य कृते समूलमुत्कृत्त सन्निवापा पार्थिवस्य ग्राहयितारः पुत्रैश्वर्यमादेशप्रत्ययादाशंसमानस्त्वद्भयादमुं[1] गोपायति नाशनादेनेति(?) । तद्भवेदभावाय महतो नः कुटुम्बस्य तर्प ... मद्कुलं महोग्रमथैव नेतुम् । ततः पातयेम वार्तौ द्वौ चापि दारकौ कल्याणकृतेम मातामहेन स्नेहान्नीताविति । कृच्छ्राच्च मामभ्युपगमय्यं (तु ? कृ)त्वा चैव स्थितो[2] ... णामयसुन्दरो मत्तहास्ति महत्करो पुरकं दशनमिति(?) सम्भ्रमावेदित-स्त्वरया निर्गतस्तं चिरेण ग्राहयित्वोपावृत्तो विमनायमानः शयने मदनुयोगादभाषत । गत इदानीं तमसि मत्तगजविद्रावितानुयात्रः किमप्यगारं भयादुपश्लिष्टो निशीथ-निर्भारिणं भित्त्यन्तरितं प्रवाचमश्रौषम् । भद्रे भामिनि ! मा मां विलम्बितागमन-मन्यथासम्भवविभवं श्रुत्वैतत् सत्येव कारणे रुदिमि(?)नृपतिनाहमद्य रात्राविस्युपह्वरे-ऽभिहितः जाने त्वा कृतात्मानं मनस्विनं मयि च भक्तिमन्तम् । मातुलस्तु दीर्घदर्शीस्वद्गुणवत् तवैहिनो विवर्धनातिमे त्वयि समीचीं वृत्तिम् (?)। उद्वृत्तश्च स (बाहुा?बहू)नपि वञ्चयित्वा पुत्रः किल भविता राजेति तमिदानीं गोपायितुं प्रवृ(त्त)स्स यदि मन्यसे विजहि तस्या(ज्यं?)शा(मु)त्सादयन्नुपां(पा?)शु नित्योग्रम् । अतश्च प्रीतिरुत्तमा वैरिनिर्यातनाच्च धर्मार्थौ च पुष्कलौ स्वाम्यर्थसाधनाद् भवन्तमभ्यावर्तेरन्निति । हृष्ट इव तन्निदेशमाश्रुत्यागतोऽस्मीति । ननु तदनुष्ठेयमेव देवादिष्टमपि निहत्य शीलम् । असुलभा एवार्थ स्वेष्वपि चापहृत्य श्लाघन्त एव सत्पुरुषाः । पीतं हि रुधिरमुष्णं भीमेन भ्रातुर्दुश्शासनस्य । एवंभाषिणीं भार्यां सोद्वेगमवोचदच्युतकः । किं परिक्षिप्यसे, किमपायमहावशंसि शीलविपर्ययः किं वापि क्षमाचरिता चित्प्रियानुरूपेण मां

1. L. about 10 letters.
2. „ 20 „

मोहयसि(?)। क इवापकर्तारो नाम गु(रवो?रुषु) यत्तत्किल्बिषमयेषु नैकप्राणापहारिषु क्षुद्रेषु धार्तराष्ट्रेषु क्षत्रियेण भीमेनाचरितं तत् किल मातृकल्पे मातुले शुक्रे शुक्लवृत्ते विश्रोपगम्यसम्पदिमभ्यवहितेनेव केनापि हेतुना मयि किञ्चिद्दूरोपक्रमेऽदुष्कुलीने देवोपहत्य लोकद्वयं मा चेष्टितमिति निर्भर्त्सिता च भर्त्रा वेपथुविषमगद्गदं वधूरभाषिष्ट प्रियप्रसर ......[1] नैव निर्घृणे पापकर्मणि भर्तारं नियोजयेत्, अपि तु हृष्ट इवागतोऽस्मीति त्वत् निरन्तर्वेपमाना त्वत्क्रोधनाय जिज्ञासार्थं ततोऽनुपन्यस्तविनीत्यपतदस्य पादयोः(?)। प्रविष्टश्चाहं पदस्थानोत्थस्तेनशङ्केन कस्त्वित्यात्तशस्त्रेण तेन पृष्टो वत्स ! योऽसावदीर्घदर्शिनो बालस्य ते वृद्धस्यापरपार्श्वपापः त्वामभ्यानुनेतुमायात इति सव्रीळमवादिषम्। अ(न्ध?न्व)नैषदिथो स्वराभिज्ञानाभ्यां? पादयोर्निपत्य। भागिनेयतया मया चैवं बोधितः— ते न जातु कोपनीयाः (सु ? क्षि)प्रकोपादुस्सन्तोषं सद्यःपाकानल्पकोपफला दूरपतीत्य प्रीत्युदर्का राजानः स यथो(क्त)कारीनाम तत्र गत्वा प्रत्यागच्छद् यत्र ते भ्राता प्रत्यागतश्चमत्कारितजनपर्युषितामिव नित्योग्रशिरःपूर्तमयत्रपाय केनचिदप्यनुपलक्षितो नेष्यसि तदियमाप समन्ततो नेर्थाः प्रतिकृतः स्यादिति(?)। प्रतिपन्ने च तेन तमनुयातं निवर्त्य निर्गतो गजमप्यालानयित्वाहमागतोऽस्मि। सर्वथानेन दुर्न्यस्तजीवितमित्यस्मिन् निन्दया च नकप्रशंसया च कृतोपचितया च जाग्रतोरेव नो विभाता. सा विभावरी। तथैव च तदर्थमहीनकालं निर्वर्त्य कुलधर्मं यशोऽस्मानीश्वरं च स साधुराराधयत्। अविश्वस्तवर्णं च मे भर्ता(र)(म?मा)कारचेष्टितैरवधाय प्रायो (म)स्कृतमनेनाबुद्धमिति बुद्ध्युत्साहप्रभावजितो भूपती रा(जानो?ज्ञो)ऽसियष्टि-

1. L about 10 letters

मभिज्ञानं दत्त्वा कञ्चित् कञ्चुकिनमन्तरङ्गं विकाले प्रेषितवान् । वेषेण क्षणदाचरक्षमेण सम्प्रत्येवागन्तव्यमस्ति कार्यं तादृशमिति । वात्येव खलु तृण्यामाक्षिपन्ति कृतधियोऽपि मतिमन्तोऽपि ..........[1] तायः स महान् मैवमय-मर्थो भावीति मद्यमुक्त्वा मन्त्रिवेषनिबद्धोऽपि न विचारयोग्या भृत्यैः पिण्डदानामादेशा इति नीलनिवसनार्धोरुकपरि .......[2] ।

..............[3] सविभ्रमविलम्बितनितम्बिनीनिकायस्तस्य मध्ये तनु-तपनीयनिर्मितग्रीवसूत्रैकतरळमाणिक्यं ..........[4] तिलकबालातपेव लक्ष्यमाणा वेणीभूतनीलशिखण्डिहारतया मुखजनितचन्द्रसन्देहसन्निहितराहुरिव सम्भाव्यमाना .......[5] र्ध्वभागं संसर्पिभिर्लोचनद्युतिभिरम्बु(ज)वनचुम्बनाशाविभ्रमभ्रमद्भ्रमर-सैन्यपुरस्सरेव सलिलमध्यसञ्चारिणी वारिदेवानां तथा हृदेनाप्यू ..........[6] षदपि मध्ययष्टिकामया मणिरज्वा गुरुपयोधरभा(नु ? र)बन्धमुद्वहन्ती पारिहार्यकेयूर-प्रभृतिभूषणपरित्यागेत्यनुपगृहीतमरकताङ्गुली ..............[7] पाधिकारसन्निहितं घर्मसमयमिव दर्शयन्ती चरणारविन्दलोभेन किं नखमणिकिरणक्षीर-धाराभिलाषेण किमात्मकुलमञ्जुशिञ्जितो ...........[8] गेण न जाने कुतोऽप्यनु-बध्नन्तं भवनहंस(को?)पोतक(प्र?)माप्रपदीनशुक्लांशुकदशावलम्बबद्धचरमवयसखलं निशाशिम(?) .........[9] मव काचिदुत्तमाङ्गना प्रत्यदृश्यत । सा च गत्वा तमेहि

1. L. about 10 letters.
2. „ 26 „
3. 5 Folios are missing here
4. L. about 38 letters
5. „ 26 „
6. L. about 18 letters.
7. „ 16 „
8. „ 18 „
9. „ 16 „

नाथ सनाथीभवत्वयमिदानीमानाथ्यचारनिर्विण्णो जन इत्यञ्जलिमुकुळ-
[1] ............ तिहशं निर्वर्त्य स्वागतं महाभागाय त्वत्प्रसादादियमस्माकिंनोकि
नावैमचुलभो(?) [2] ........ पलबन्धशाली संवृत्तो मनोरथः । तदनुभवतु महाभागः
सम्भः [3] ............ त्य रदमृनधारयाभिभाष्य देवं राजवाहनं सह ताभ्यां
तमेवाभिव [4] ............ प्रेसरक कवेत्रहस्तकाञ्चुकीयहुङ्कारदू(रीकृत)जनसं [5] ... ........
न मणिमयेन वर्त्मना नगरमाविवेश । आससाद च विविधमङ्गलविधानल्य [6] .... ...
नाग मङ्गणरणद्वाङ्गतूर्यायमाणगणतिथवार [7] ........ रणं भवनम् । तत्रच महति
वैदूर्यमण्डपे ससखीजनसम्भ्रा [8] ........... योर्वासिताम्बूलच [9] .... ....... पार-
हत्तविस्रम्भापराशयोस्तयोः स्वयं च मन्त्रियद्धप्रपन्नहीनविष्टरा(?) [10] ........... मपि
ध्यात्वा भूयो राजवाहन(वाहन?)मुखे निधाय ह [11] ........ रप्राणदक्ष मम बधान
दानमभ्यर्थयते त्वत्प्रसादं च वर्धितः प्रणयो यदिदमिन्द्रनीलमणिमयधरणीपृष्ठ-
मम्बरतलगोलमूलाभोगाविभ्रमं समालक्ष्य [12] ........ न्नामव(?) । यश्च स विक्रमो-
द्यतत्रिविक्रमचरणविक्षेपक्षभूनोऽर्थि(त?)ज न)प्रणयाखण्डनप्रति(ज्ञो) नमुचिर्नाम
दानवेन्द्रस्तस्येदं पुरम् । अनु [13] ........ स्य मन्दाकिनी नाम दुहिता । हते पितरि
त्रिभुवनविजिगीषुणा कल्पादिमहीवराहसम्पर्करागसम्भूनेन त्रिदशपतिसुन्दरीवृन्द-

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 1. | L. about | 20 letters. | | 8. | L. about | 26 letters | |
| 2. | | 4 | ,, | 9. | ,, | 18 | ,, |
| 3. | | 20 | ,, | 10. | ,, | 8 | ,, |
| 4. | | 8 | ,, | 11. | ,, | 8 | ,, |
| 5. | | 18 | ,, | 12. | ,, | 6 | ,, |
| 6. | | 9 | ,, | 13. | ,, | 20 | ,, |
| 7 | | 15 | ,, | | | | |

सान्द्र ...... आसोदीर्णश्वासपवनसेवितेन सकलमहासुरेन्द्रवृन्दवन्दिते(न) नरकेणास्मि संवर्धिता। तस्य च दुहितुर्यज्ञवत्या ...........[2] ति परं मैत्रमासीत्। आसीच्च पुनरावयोरपि सखी सुन्दोपसुन्दसौभ्रात्रग्रावभेदमदनकुटाकटङ्कधारा शङ्करा[3]ननपङ्क ...... ... त्रिदशलोकलोचनभ्रम(र)कदम्बकाहम्पूर्विकावलुप्त-यौवनकुसुमोद्गमा तिलोत्तमा नाम। तिलस्स ..............[4] न्दरी यज्ञवती तु मन्मथमनोधिरोहिणि प्रथमसोपानपर्वणि वयसि वर्तमाना मया तिलोत्तमया[5] ........ रिसानुकाननानि समनुभूय प्रतिनिवृत्ता भवनमेकाकिनी शयनमेत्य निस्सहे[6] ................... ।

[7] ............थ तदवधारणो ... ... न शक्यमिति दयमानेव तस्या रतिर(चर ? प)जहार हृदयं सत्यं न वेति दूतीव्याव(र्णि)तमात्मेनैव गत्वा दिक्षु(रु?उ) उज्झनिव देहं मुमोह (?)। निपुणया पुनः पत्रलेखया कादम्बरीशिखण्डभूषण-श्रीवत्ससमुद्राङ्कितान्माणिसमुद्गादुद्धृत्य तत्करकिसलयसं(क्रू ? स्क्र)तेन (रक्तो ?) रक्तचन्द(नो ? नेना)नुलिप्य प्रत्याश्वसीत्। अथ कटकादागतः प्रज्ञातत(पो?रो) मनोजवो नाम दूतो व्यज्ञापयत्। स च सह मेघनादेनाग्रतः पत्र-लेखामितः प्रेष्य प्रयाणदुन्दुभिमादिश्याच्छोदतटे महाश्वेताश्रमान्तिकमणि-गृहागतं हरमभिप्रणम्य निर्यातमात्रः किमप्यस्पृश्यत ज्वररूपेणामयेन मन्त्रिकुमारो वैशम्पायनः। तदासीत् कतिपयदिवसावस्थायि सैन्यम्।

अथ यः स देवेन जित्वा सुवर्णपुरान्निरस्तः किरातानां हेमजटानां

1. L. about 20 letters.
2. „ 23 „
3. „ 25 „
4. „ 30 „
5. L. about 30 letters.
6. „ 36 „
7. 7 folios are missing here

पतिर्महाबलः स किम्पुरुषैः संभूयाभ्यषेणयत् । अयुध्यतोमं दरिद्रं राजन्यमा- कलय्याकलय्य शमितः संरम्भेण मन्त्रिपुत्रस्य तेन चासौ हेम(कू ? ज)टेश्वरः किंपुरुषाङ्कं किंपुरुष एवासन्निति(?) । तच्च सर्वं पित्रे निवेद्य किंपुरुषवर्षाभियोग- मिष्टजनदर्शनोत्सुकोऽभ्यर्थयाम्बभूव । स्नेहविक्लवेवाद्यस्यत्येव राजनि विस्मय- परम्परोद्वेषक्षीतः(?) क्षितिमवततार तारापथात् कोऽपि रत्नमाली रथः, ततो- ऽवतीर्य पुरुषस्तरुणादित्यदीप्तो हेमचित्रमौलिमानमध्य ...[1] जनं सव्य ...[2] पादि कं चक्रवर्तिगुरवे सन्दिशति गन्धर्वराजश्चित्ररथः प्रस्तुतोऽत्र मद्दुहितुः कादम्बर्याः स्वयंवराविधिः सन्निपतितश्च देव .......[3] पार्थिवो देव इव कार्तवीर्यो हेहयानां ललामभूतो वर्तते यदि .......[4] जानन्नपि क्षोभपर्यन्ततां प्रायः स्वयंवराणां धर्मोऽयं क्षात्रिय ......[5] तः सर्व एते परिजनास्तमेव रथमिन्द्रायुधश्च स्वयमास्थाय कैलास(नि)कटवर्तिकटकमापेदे । सह ......[6] गणैः गन्धर्वराजेन सत्कृ(तान्त ? तस्तन्नि)र्दिष्टं रक्ताविमालिभवनमध्यतिष्ठत । तथातिहृष्टं कुमारमुद्यानचित्रशालागतमनेकै(पयधरः?रुपचारैः) पर्यचारयत् केयूर- कतम ....[7] प्रमुखं कादम्बरीपरिजनः । सायञ्च सारप्राभृतभारहस्तपरिजनानुया- ते महाश्वेतामदलेखे समासेदतुः । ते तमनङ्गक्षीणमापाण्डुरं च दृष्ट्वा स(म्भाया? मभावय)ताम् । सोऽपि तयोर्दर्शनेन जात्यन्ध इव लब्धचक्षु(र्न)नन्द । ताभ्याञ्च ससम्भ्रमोत्थितचरणप्रणामकण्ठग्रहोप(रि ?)चरिताभ्यां यथार्हं सम्भाव्य कच्चित् कुशलाभ्यामनार्ये विजने पराङ्मुखीभवतुर्दुर्दुर्दामहृदयविरहदाहज्वरव्यसनमूढ-

1, 2. The two lacunæ cover about 6 letters.
3. L. about 32 letters.
4. ,, 40 ,,
5. L. about 40 letters,
6. ,, 25 ,,
7. ,, 2 ,,

